BIBLIOTHECA INDICA:
A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1306.

# ॥ शतपथब्राह्मणम् ॥

## सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम्

## THE CATAPATHA BRAHMANA

OF THE WHITE YAJURVEDA,
WITH THE
COMMENTAY OF SAYANACHARYA




EDITED BY
LATE ACHARYA SATYAVRATA SAMASRAMI'S
son and pupil
**PROF. HITAVRATA SAMAKANTHA.**
*Assistant Lecturer, Vedas, The University of Calcutta.*

VOL. IX. FASC. I.

CALCUTTA:
PRINTED BY S. V. CHATTERJI, SATYA PRESS, 16/1, GHOSE LANE.
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET,
1911.

# ॥ शतपथब्राह्मणम् ॥



॥ अथ ॥

## ॥ नवमकाण्डम् ॥

### ॥ अथ प्रथमः प्रपाठकः ॥

॥ प्रथमं ब्राह्मणम् ॥

॥ अपिवा प्रथमाध्याये प्रथमं ब्राह्मणम् ॥



॥ हरिः ॐ ॥

अथातः शतरुद्रियं जुहोति । अत्रैष सर्व्वो ऽग्निः संस्कृतः स एषो ऽत्र रुद्रो देवता तस्मिन् देवा एतदमृतꣳ रूपमुत्तममदधुः स एषो ऽत्र दीप्यमानो ऽतिष्ठदन्नमिच्छमानस्तस्माद्देवा अबिभयुर्यद्वै नो ऽयं न हिꣳस्यादिति * ॥ १ ॥

---

* 'हिꣳस्यादिति'—इति ग, घ ।

ते ऽब्रुवन् । यन्न मस्मै सम्भराम तेनैनꣳ शमया मेति तस्मा ऽएतदन्नꣳ समभरञ्छान्तदेवत्यं तेनैन मशमयंस्तद्यदेतं देव मेतेनाशमयंस्तस्माच्छान्तदेवत्यꣳ शान्तदेवत्यꣳ ह वै तच्छतरुद्रिय मित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्तथैवास्मिन्नय मेतद मृतꣳ रूप मुत्तमं दधाति स एषो ऽत्र दीप्यमान स्तिष्ठत्यन्न मिच्छमानस्तस्मा ऽएतदन्नꣳ सम्भरति शान्तदेवत्यं तेनैनꣳ शमयति ॥ २ ॥

जर्त्तिलैर्जुहोति । जायत ऽएष एतद्यच्चीयते स एष सर्व्वस्मा ऽअन्नाय जायत ऽउभयम्वेतदन्नं यज्जर्त्तिला यच्च ग्राम्यं यच्चारण्यं यदह तिलास्तेन ग्राम्यं यदकृष्टे पच्यन्ते तेनारण्य मुभयेनैवैन मेतदन्नेन प्रीणाति ग्राम्येण चारण्येन च ॥ ३ ॥

अर्कपर्णेन जुहोति । अन्न मर्को ऽन्नेनैवैन मेतत् प्रीणाति ॥ ४ ॥

परिश्रित्सु जुहोति । अग्नय एते यत्परिश्रित स्तेष्वेवैता अग्निष्वाहुतयो हुता भवन्ति ॥ ५ ॥

यद्वेवैतच्छतरुद्रियं जुहोति । प्रजापतेर्व्विस्र-
स्ताद्देवता उदक्रामंस्तमेक एव देवो नाजहान्मन्युरेव
सो ऽस्मिन्नन्तर्व्विततो ऽतिष्ठत् सो ऽरोदीत्तस्य यान्य-
श्रूणि प्रास्कन्दंस्तान्यस्मिन् मन्यौ प्रत्यतिष्ठन्त्स एव
शतशीर्षा रुद्रः समभवत् सहस्राक्षः शतेषुधिरथ या
अन्या विप्रुषो ऽपतंस्ता असंख्याता सहस्राणीमाँ-
ल्लोकाननुप्राविशंस्तद्यद्रुदितात्समभवंस्तस्माद्रुद्राः सो
ऽयꣳ शतशीर्षा रुद्रः सहस्राक्षः शतेषुधिरधिज्यधन्वा
प्रतिहितायी भीषयमाणो ऽतिष्ठदन्न मिच्छमानस्तस्मा-
द्देवा अबिभयुः ॥ ६ ॥

ते प्रजापति मब्रुवन् । अस्माद्वै विभीमो यद्वै
नोऽयं न हिꣳस्यादिति सो ऽब्रवीदन्न मस्मै सम्भरत
तेनैनꣳ शमयतेति तस्मा ऽएतदन्नꣳ समभरञ्छतरु-
द्रियं तेनैन मशमयंस्तद्यदेतꣳ शतशीर्षाणꣳ रुद्र
मेतेनाशमयं स्तस्माच्छतशीर्षरुद्रशमनीयꣳ शतशीर्ष-
रुद्रशमनीयꣳ ह वै तच्छतरुद्रिय मित्याचक्षते परोऽक्षं
परोऽक्षकामा हि देवास्तथैवास्मा ऽअय मेतदन्नꣳ सम्भ-
रति शतरुद्रियं तेनैनꣳ शमयति ॥ ७ ॥

गवेधुकासक्तुभिर्जुहोति। यत्र वै सा देवता विस्रस्ताशयत्ततो गवेधुकाः समभवन्त्स्वेनैवैन मेतद्भागेन स्वेन रसेन प्रीणाति ॥ ८ ॥

अर्कपर्णेन जुहोति। एतस्य वै देवस्याशयादर्काः समभवन्त्स्वेनैवैन मेतद्भागेन स्वेन रसेन प्रीणाति ॥९॥

परिश्रित्सु जुहोति। लोमानि वै परिश्रितो न वै लोमसु विषं न किञ्चन हिनस्त्युत्तरार्द्धेऽग्नेरुदङ् तिष्ठन् जुहोत्येतस्याᳪ ह दिश्येतस्य देवस्य गृहाः स्वाया मेवैन मेतद्दिशि प्रीणाति स्वायां दिश्यव यजते ॥ १० ॥

स वै जानुदघ्ने प्रथमᳪ स्वाहाकरोति। अध-इव वै तद्यज्जानुदघ्न मध-इव तद्यदयं लोकस्तद्य ऽइमं लोकᳪ रुद्राः प्राविशंस्तां स्तत् प्रीणाति ॥ ११ ॥

अथ नाभिदघ्ने*। मध्यमिव वै तद्यन्नाभिदघ्नं मध्यमिवान्तरिक्षलोकस्तद्ये ऽन्तरिक्षलोकᳪ रुद्राः प्राविशंस्तां स्तत् प्रीणाति ॥ १२ ॥

---

* 'नाभिदघ्ने'—इति ग, घ।

अथ मुखदघ्न। ऽउपरीव वै तद्यन्मुखदघ्न मुपरीव तद्यदसौ लोकस्तद्येऽमुं लोकᳫं रुद्राः प्राविशंस्तां स्तत् प्रीणाति स्वाहाकारेणान्नं वै स्वाहाकारो ऽन्नेनैवैना-नेतत् प्रीणाति ॥ १३ ॥

नमस्ते रुद्र मन्यव ऽइति। य एवास्मिन्स्तो ऽन्तर्मन्युर्व्वितलो ऽतिष्ठत्तस्मा ऽएतन्नमस्करोत्युतो त ऽइषवे नमो वाहुभ्या मुत ते नम इतीषु च हि वाहुभ्यां च भीषयमाणो ऽतिष्ठत् ॥ १४ ॥

स एष चत्र देवः *। यः स शतशीर्षा समभवद्विश इम ऽइतरे ये विमुड्भ्यः समभवंस्तस्मा ऽएतस्मै चत्रायैता विश एतं पुरस्तादुद्धार मुदहरन्त्य एष प्रथमो ऽनुवाकस्तेनैन मप्रीणंस्तथैवास्मा ऽअय मेतं पुरस्तादुद्धार मुद्धरति तेनैनं प्रीणाति तस्मादेष एकदेवत्यो भवति रौद्र एतᳫं ह्येतेन प्रीणाति ॥ ॥ १५ ॥

चतुर्दशैतानि यजूᳫंषि भवन्ति। त्रयोदश मासाः संव्वत्सरः प्रजापतिश्चतुर्दशः प्रजापतिरग्नि-

---

* 'देवः'—इति ग, घ।

यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति नमो नम इति यज्ञो वै नमो यज्ञेनैवैनमेतन्नमस्कारेण नमस्यति तस्मादु ह नायज्ञियं ब्रूयान्नमस्त ऽइति यथा हैनं ब्रूयाद्यज्ञस्त ऽइति ताहक्तत् * ॥ १६ ॥

अथ हन्तृभ्यो जुहोति । नमो ऽमुष्मै चेति तद्यथा वै ब्रूयादसौ† त्वं च न एष च मा हिᳬसिष्टमित्येवमेतदाह नतराᳬ हि विदित आमन्त्रितो हिनस्ति ॥ १७ ॥

नमो हिरण्यबाहवे । सेनान्ये दिशां च पतये नम इत्येष एव हिरण्यबाहुः सेनानीरेष दिशां पतिस्तद्यत् किञ्चानेकदेवत्यमेतमेव तेन प्रीणाति एतमेव तद्दिश्यपिभागं करोति तस्माद्यद्दिशस्तस्मिन् क्षत्रियो ऽपिभागोऽथ या असंख्याता सहस्राणीमाँ-ल्लोकाननुप्राविशन्नेतास्ता देवता याभ्य एतज्जुहोति‡ ॥ ॥ १८ ॥

---

* 'ताहक्तत'—इति ग, घ।

† 'ब्रूयादसौ'—इति च इष्टं डा० वेबरमहोदयेन ।

‡ '०जुहोति'—इति ग, घ ।

अथ जालेभ्यो जुहोति। एतानि ह जालान्येते
ाद्रा अनुप्रविविशुर्यथ-यथैते तदेवैनानेतत् प्रीणा-
ाथो ऽएवठ् हैतानि रुद्राणां जालानि देवानां वै
वेधामनु मनुष्यास्तस्माद् हेमानि मनुष्याणां जा-
ाानि यथाजातमेवैनानेतत् प्रीणाति ॥ १८ ॥

तेषां वा ऽउभयतो नमस्कारा अन्ये *। अन्य-
ारतोनमस्कारा अन्ये ते ह ते घोरतरा अशान्ततरा
। ऽउभयतोनमस्कारा उभयत एवैनानेतद्यज्ञेन नम-
स्कारेण शमयति ॥ २० ॥

स वा ऽअशीत्यां च स्वाहाकरोति। प्रथमे
वानुवाके ऽथाशीत्या मथाशीत्यां च यानि चोर्द्धानि
यजूठ्ष्यावतानेभ्यो ऽन्न मशीतयो ऽन्नेनैवैनानेतत् प्री-
णाति ॥ २१ ॥

अथैतानि यजूठ्षि जपति। नमो वः किरि-
केभ्य इत्येतद्वास्य प्रतिज्ञाततमं धाम यथा प्रियो
वा पुत्रो हृदयं वा तस्माद्यदेतस्माद्देवाच्छङ्केत तदेता-

---

* 'अभि । ऽन्यतरतो'—इति च ।

भिर्व्याहृतिभिर्जुहुयादुप हैवैतस्य देवस्य प्रियं धाम गच्छति तथो हैन मेष देवो न हिनस्ति ॥ २२ ॥

नमो वः किरिकेभ्य इति। एते हीदꣳ सर्व्वं कुर्व्वन्ति देवानाꣳ हृदयेभ्य इत्यग्निर्व्वायुरादित्य एतानि ह तानि देवानाꣳ हृदयानि नमो विचिन्वत्केभ्य इत्येते हीदꣳ सर्व्वं विचिन्वन्ति नमो विक्षिणत्केभ्य इत्येते वै तं विक्षिणन्ति यं विचिक्षीषन्ति नम आनिर्हतेभ्य इत्येते ह्येभ्यो लोकेभ्यो ऽनिर्हताः ॥ २३ ॥

अथोत्तराणि जपति। द्रापे ऽन्धसस्पत इत्येष वै द्रापिरेष वै तं द्रापयति यं दिद्रापयिषत्यन्धसस्पत ऽइति सोमस्य पत ऽइत्येतद्दरिद्र नीललोहितेति नामानि चास्यैतानि रूपाणि च नामग्राह मेवैन मेतत् प्रीणात्यासां प्रजाना मेषां पशूनां मा भेर्मा रोङ्मो च नः किञ्चनाम मदिति यथैव यजुस्तथा बन्धुः ॥ २४ ॥

स एष क्रूरो देवः* । तस्मा ऽएतस्मै घवायैता

* 'देवः'—इति ग, घ।

विशो ऽमुं पुरस्तादुद्वार मुदहरन्यो ऽसौ प्रथमो ऽनुवाको ऽयात्मा ऽएत मुपरिष्टादुद्वार मुदहरंस्तेनैन मप्रीणंस्तथै- वास्मा ऽअय मेत मुपरिष्टादुद्वार मुद्धरति तेनैनं प्रीणाति तस्मादृप्येष एकदेवत्यो भवति रौद्र एवै- तठ छ्यैवैतेन प्रीणाति * ॥ २५ ॥

सप्तैतानि यजूठषि भवन्ति । सप्तचितिको- ऽग्निः सप्तऽर्त्तवः संवत्सरः संवत्सरो ऽग्निर्यावा- नग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति तान्युभयान्येकविठशतिः सम्पद्यन्ते द्वादश मासाः पञ्चऽर्त्तवस्त्रय इमे लोका असावादित्य एकविठश एता मभिसम्पदम् ॥ २६ ॥

अथावतानान् जुहोति । एतद्वा ऽएनान् देवा एतेनान्नेन प्रीत्वाथैषा मेतैरवतानैर्द्धनूठष्यवातन्वंस्तथै- वैनानय मेतदेतेनान्नेन प्रीत्वाथैषा मेतैरवतानैर्द्धनूठ- ष्यवतनोति न ह्यवततेन धनुषा कं चन हिनस्ति ॥ ॥ २७ ॥

---

* 'प्रीणाति'—इति क ।

तद्वै सहस्रयोजन ऽइति। एतद्ध परमं दूरं यत् सहस्रयोजनं तद्यदेव परमं दूरं तदेवैषा मेतद्धनूꣳष्यवतनोति * ॥ २८ ॥

यद्वेवाह सहस्रयोजन ऽइति। अय मग्निः सहस्रयोजनं न ह्येतस्मादिति नेत्यन्यत् पर मस्ति तद्यदग्नौ जुहोति तदेवैषाꣳ सहस्रयोजने धनूꣳष्यवतनोति † ॥ २९ ॥

असंख्याता सहस्राणि। अस्मिन् महत्यर्णव ऽइति यत्र-यत्र ते तदेवैषा मेतद्धनूꣳष्यवतनोति‡ ॥ ॥ ३० ॥

दशैतानवतानान् जुहोति। दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैषा मेतद्धनूꣳष्यवतनोति § ॥ ३१ ॥

अथ प्रत्यवरोहान् जुहोति। एतद्वा ऽएतदिमाँल्लोकानित ऊर्ध्वो रोहति स स पराङिव रोह इय

*, †, ‡, § 'धनूꣳष्यवतनोति'—इति क।

सु वै प्रतिष्ठा ते देवा इमां प्रतिष्ठा मभिप्रत्यायंस्तथै-
वैतद्यजमान इमां प्रतिष्ठा मभिप्रत्येति ॥ ३२ ॥

यद्देव प्रत्यवरोहति। एतद्वाऽ एनामेतत् प्रीण-
न्नन्ववैति तत एवैतदात्मान मपोद्धरते जीवात्वै तथो
हानेनात्मना सर्व्व मायुरेति ॥ ३३ ॥

यद्देव प्रत्यवरोहति। एतद्वा ऽएतदेतान् रुद्रा-
नित ऊर्द्धान् प्रीणाति तान् पुनरमुतो ऽर्व्वाचः ॥३४॥

नमोऽस्तु रुद्रेभ्यो ये दिवीति। तद्ये ऽमुष्मिं-
ल्लोके रुद्रास्तेभ्य एतन्नमस्करोति येषां वर्षमिषव
इति वर्षᳯ ह तेषा मिषवो वर्षेण ह ते हिᳯसन्ति
यं जिहिᳯसिषन्ति ॥ ३५ ॥

नमोऽस्तु रुद्रेभ्यो ये ऽन्तरिक्ष ऽइति। तद्ये ऽन्त-
रिक्षलोके रुद्रास्तेभ्य एतन्नमस्करोति येषां वात
इषव इति वातो ह तेषा मिषवो वातेन ह ते
हिᳯसन्ति यं जिहिᳯसिषन्ति ॥ ३६ ॥

नमोऽस्तु रुद्रेभ्यो ये पृथिव्या मिति। तद्ये
ऽस्मिंल्लोके रुद्रास्तेभ्य एतन्नमस्करोति येषा मन्न-

मिषव इत्थन्नꣳ ह तेषा मिषवो ऽन्नेन ह ते हिꣳसन्ति यं जिहिꣳसिषन्ति ॥ ३७ ॥

तेभ्यो दश प्राचीः । दश दक्षिणा दश प्रतीची-र्दशोदीचीर्दशोर्द्ध्वा इति दशाक्षरा विराड्विराडग्निर्दश दिशो दिशो ऽग्निर्दश प्राणाः प्राणा अग्निर्यावा-नग्निर्यावत्यस्य मात्रा तावतैवैनानेतदन्नेन प्रीणाति* ॥ ॥ ३८ ॥

यद्देवाह दश-दशेति । दश वा ऽअञ्जलेरङ्गुलयो दिशि-दिश्येवैभ्य एतदञ्जलिं करोति तस्माद् हैतद्-भीतो ऽञ्जलिं करोति तेभ्यो नमो ऽअस्त्विति तेभ्य एव नमस्करोति ते नो मृडयन्त्विति त ऽएवास्मै मृडयन्ति ते यं द्विष्मो यश्च नो द्वेष्टि त मेषां जम्भे दध्म इति य मेव द्वेष्टि यश्चैनं द्वेष्टि त मेषां जम्भे दधात्यमु मेषां जम्भे दधामीति ह ब्रूयाद्यं द्विष्या-त्ततो ऽह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत स्वयंनिर्दिष्टो ह्येव स यमेवंविद्द्वेष्टि ॥ ३९ ॥

---

* 'प्रीणाति'—इति क ।

विष्कृत्वः प्रत्यवरोहति। त्रिहद्‌ग्निर्यावानग्नि-र्यावत्यस्य मात्रा तावतैवैनानेतदन्नेन प्रीणाति स्वाहा-कारेणान्नं वै स्वाहाकारो ऽन्नेनैवैनानेतत् प्रीणाति त्रिरित ऊर्द्धो रोहति तत् षट् तस्योक्तो बन्धुः॥ ४० ॥

यद्देव त्रिष्कृत्वः प्रत्यवरोहति। त्रिर्हि कृत्व ऊर्द्धो रोहति तद्यावत् कृत्व ऊर्द्धो रोहति तावत् कृत्वः प्रत्यवरोहति ॥ ४१ ॥

अथ तदर्कपर्णं चात्वाले प्रास्यति। एतद्वा ऽएनेनैतद्रौद्रं कर्म करोति तदेतदशान्तं तदेतत्तिरः करोति नेदिद मशान्तं कश्चिदभितिष्ठात्तन्नेद्धिनस-दिति तस्माच्चात्वाले यद्देव चात्वाले ऽग्निरेष यच्चा-त्वालस्तथो हैनदेषो ऽग्निः सन्दहत्यथातः सम्पदेव *

॥ ४२ ॥

तदाहुः। कथ मस्यैतच्छतरुद्रियᳫ संव्वत्सर मग्नि माप्नोति कथᳫ संव्वत्सरेणाग्निना सम्पद्यत ऽइति षष्टिश्च ह वै त्रीणि च शतान्येतच्छतरुद्रिय

---

* 'सम्पदेव'—इति ग, घ।

मथ विꣳशदथ पञ्चविꣳशत्ततो यानि षष्टिश्च त्रीणि च शतानि तावन्ति संवत्सरस्याहानि तत् संवत्सरस्याहान्याप्नोत्यथ यानि त्रिꣳशत्रिꣳशन् मासस्य रात्रयस्तन् मासस्य रात्रीराप्नोति तदुभयानि संवत्सरस्याहोरात्राण्याप्नोत्यथ यानि पञ्चविꣳशतिस्स त्रयोदशो मासः स आत्मा त्रिꣳशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर एव पञ्चविꣳश मेतावान् वै संवत्सर एव सु शाण्डैतच्छतरुद्रियꣳ संवत्सर मग्नि माप्नोत्येवꣳ संवत्सरेणाग्निना सम्पद्यत ऽएतावत्य उ वै शाण्डिले ऽग्नौ मध्यतो यजुष्मत्य इष्टका उपधीयन्ते ऽग्नयो हैते पृथग् यदेता इष्टका एत्र सु शाण्डैते ऽग्नयः पृथक् शतरुद्रियेणाभिहुता भवन्ति * ॥ ४३ ॥

तदाहुः । कथ मस्यैतच्छतरुद्रियं महदुक्थ माप्नोति कथं महतोव्रथेन सम्पद्यत ऽइति यान्यमूनि पञ्चविꣳशतिर्यजूꣳष्यभितो ऽशीतीः स पञ्चविꣳश आत्मा यत्र वा ऽआत्मा तदेव शिरस्तत्

---

* 'भवन्ति'—इति ख ।

पच्चपुच्छान्यथ या अशीतयः सैवाशीतीना माप्तिर-शीतिभिर्हि महदुक्थ माख्यायतेऽथ यदूर्द्ध मशीतिभ्यो यदेवादो महत उकथस्योर्द्ध मशीतिभ्य एतदस्य तदेव सु शास्यतच्छतरुद्रियं महदुक्थ माप्नोत्येवं महतोकथेन सम्पद्यते ॥ ४४ ॥ १ ॥

॥ इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थाना मुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥

चितीनामुपधानं हि काण्डेऽष्टम उदीरितम् ।
अथास्मिन्नवमे कर्म सञ्चितस्याभिधास्यते ॥

"तत्रादौ तावच्छतरुद्रियहोमं विधत्ते *—

"अथात इति 'अथ' शब्देनात्र चित्युपधाय परिसमाप्त्य-नन्तर्यद्योत्यते: अत इति यतः कारणात् सञ्चितः अग्निरुप

* का० श्रौ० सू० १८. १. १. वा० सं० १६ १ - १६ ।

शमयनीयः अतो हेतोः शतरुद्रिय मिति कर्मनामधेयं यथा अग्निहोत्रं जुहोतीति। 'शतरुद्रियं जुहोति' शतरुद्रायाख्यं होमं भावयेदित्यर्थः। विहितोऽयं होमो रुद्ररूपतायवस्थाग्नेरुप शमनार्थं इत्याह। 'अ वै' इत्यादिना तेनैनं शमयनीयत्वेन अत्रास्मिन्नवसरे एषः 'अग्निः' साकल्येन संस्कृतो भवति। अतएवासौ 'रुद्रो देवताः' यतः कारणादेवास्त्वस्मिन्नेतच्चयनलक्षणेन संस्कारेण निष्पन्न 'अमृतं' अतएवोत्तमं रूपं 'अदधुः' विस्रंसनात् प्राक् यदमृतं रूप मस्ति तस्य विस्रंसनावसरे गतत्वादेव पुनरत्र चयनसंस्कारेणादधुः। तस्या दीप्तोऽग्निः 'दीप्यमानोऽत्र मिच्छमानो' तिष्ठन् इच्छमान इति व्यत्ययेन शानच् × × × तथाभिधानात् रुद्राद्देवा अनेनोपायेन नोऽयं हिंस्यादिति अबिभयु रिति ॥ १ ॥

'ते' देवा 'अस्मै' रुद्राय 'अन्नं' सम्भराम तेनैनं शमयामेति परस्य मुक्ता तथैवाकार्षुः। 'शान्तदेवत्यं शान्तदेवतार्थं देवताशान्त्यर्थं मित्यर्थः। अतएव शमनार्थत्वात् तदन्नं शान्तदेवत्यं तत्र देवाः परोक्षकामत्वात् 'शतरुद्रीय' मित्यर्थः। तदत्र साध्यत्वात् कर्मापि तथैव व्यपदिश्यते। तथाच पूर्वं यथैव देवा अकार्षुः तथैवासावपि यजमानः तेन सदंशमितवान् भवति ॥ २ ॥

प्रकृते होमे द्रव्यविशेषं विधाय तस्य चोभयविधात्मकत्वात् चयनसंस्कारे जात रुद्रदेवतोचित रूपत्वेन प्रशंसति— "जर्तिलैर्जुहोमीत्यादिना * 'जर्तिला' आरण्यतिलाः 'स एष' इति उत्पद्यमानस्य सर्वस्य सर्वभोगार्थं मुत्पन्नो स एव अग्निः 'सर्वस्मा

---

* का० श्रौ० सू० १८ १.२।

भवाय जायते' सर्वाश्वभोगार्थं जायत इत्यर्थः। साधारणेन होम-साधनतया जुहाः प्राप्तावपवाद माह॥ ३ ॥

"अर्कं पर्णेति। अत्र 'अर्क' इति। अर्कस्य भोग्यं प्रपश्चान्तः पातित्वादश्वत्वं जुहोतीतिचोदितत्वेनाहवनीये होमे प्रसक्तावाह परिश्रित्स्विति *। परिश्रित इति चितेः परितो निखिताः क्षुद्रपाषाणाः तेष्वयं होमः कर्त्तव्यः। तेषां चाग्नेः परितः श्रयणादग्नि तेनैता आहुतयोऽग्नि मत्येव प्रदेशे हुता भवन्ति। अत्र कात्यायनः—"शतरुद्रियहोम उत्तरपक्षस्या परस्याᳲ स्रक्त्यां परिश्रित्स्वर्कपर्णेनार्ककाष्ठेन शातयन्निति †।" अर्ककाष्ठञ्च दण्डस्थाने करणीयम् ॥ ४, ५ ॥

अथ पुनस्तमिवहोमे शतशीर्षस्य रुद्रस्येतरेषाञ्च रुद्राणा मुत्पत्तिप्रकारं दर्शयन् तच्छमनार्थतत्वेन प्रशंसति— "यद्देवैतदित्यादिना। 'प्रजापतेः' सकाशात् विस्रंसनावसरे सर्वासु देवतासु तिर्यगतास्वपि एक एव 'मन्यु' र्देवस्तमपरित्यज्य तस्मिन्नेवान्तः पिस्तृतो तिष्ठन् पश्चात् 'स' प्रजापति विस्रंसनात् 'अरोदीत्' रोदनाञ्च ततो 'यान्यश्रूणि प्रास्कन्दन्' अपतन् तान्यन्तर्वर्त्तमाने 'मन्यौ' प्रतिष्ठितान्यभूवन् ततः स 'मन्यु:' शतशीर्षत्वादि गुणको रुद्रोऽभूत्। अथ ततो ये अश्रुकणा जाता स्ते अनेके भूत्वा ‡ पृथिव्यादि लोकान् 'प्राविशत्' "तत्र ते अनेके 'रुद्राः' जाताः,

---

* 'प्रसक्तावादपरिश्रित्स्विति'—इति ग।

† का० श्रौ० सू० १८. १. १।

‡ 'रुद्राजनाः'—इति ग।

रोदनाच्च तेषा मुत्पत्तेः रुद्रत्वम्। 'यः' पुनः 'शतशीर्षा रुद्रः' शतशीर्षो रुद्रोऽभूत् 'प्रतिहितायी' स प्रतिहिताय अभिमुखस्थायै प्रजायै भयायै तत्रात्र मिच्छन्नतिष्ठत् ॥ ६ ॥

तस्माद्देवा अविभीत्वा * प्रजापतिं दृष्ट्वा ततोऽन्नसम्भरणैः शमयतेत्युपदेशं प्राप्य तथैवान् अतिष्ठत्। एतच्चान्नं शतशीर्षरुद्रशमनार्थत्वाच्छतशीर्षरुद्रशमनीयं तच्च परोक्षकामत्वाद्देवाः शतरुद्रिय मिति व्याहरन्ति। अतो यथैव देवाः शतशीर्षं शतरुद्रं शमयन्तथैवाय मपि यजमान एनं शतरुद्रियहोमलक्षणेनोपायेन शमितवान् भवति ॥ ७ ॥

तथैव होमद्रव्यान्तरम् विधाय प्रशंसति— "गवेधुकासक्तुभिरिति। गवेधुका आरण्या गोधुमाः तेषां पिष्टैः शतरुद्रियं जुहुयात्। 'सः' प्रजापतिरूपा 'देवता' 'यत्र' यस्मिन् † प्रदेशे 'विस्रस्तामयत' अशयदिति शेतेर्लुङि व्यत्ययेन परस्मैपदशाब्दिकरणे च रूपं, 'ततः' प्रदेशात् गवेधुका जाताः। अतस्तैर्होमसम्पादने स्वेचभागे तस्यैवार्थप्रदर्शनम्। "स्वेन रसेनेति। स्वकीयेन रसेन येन भागेनैनं प्रीणितवान् भवति। अत्र जर्त्तिलैर्जुहोति गवेधुकासक्तुभिर्जुहोतीति, पृथगेव विहितत्वाद्व्यविकल्पः। अतएवापस्तम्बेन सूचितम्,— "शतरुद्रियं जुहोति जर्त्तिलयवाग्वा गवीधुकयवाग्वा जर्त्तिलैर्गवीधुकसक्तुभिः कुसयसर्पिषाजाक्षीरेण मृगीक्षीरेणयेति ‡। यत्पुनरुक्तं कात्यायनेन,— "जर्त्तिलमिश्रान्

* 'अविनीत्वा'—इति ख।

† '०देवाभयस्मिन् प्रदेशे'—इति भ।

‡ आ० औ० सू० १७ ११. १।

गवेधुकासक्तून्" * —इतीति समुच्चयेनैतच्छाखान्तरानुसारेणोक्त मित्यवगन्तव्यम् ॥ ८ ॥

अर्कपर्णेन जुहोत्यग्रकामं इत्यनेनैवार्कपर्णहोमसाधनत्वेन विहितम्। पुनरपि प्रकारान्तरेण स्तौति— "अर्कपर्णेनेति। आशयो हृदयदेशः ॥ ९ ॥

अर्कपर्णवदेव परिश्रितोऽपि प्रकारान्तरेण स्तौति—

"परिश्रित्सु जुहोतीति। 'लोमानि' देहं 'परिश्रितः' अयन्ति परिश्रितोप्यग्निं परितः अयन्तीति लोमानि 'लोमसु' विषवास्ति लोमसु विष संसृष्टेष्वपि बाधाभावात्। अतश्च लोमात्मकेषु परिश्रित्सु होमाद्रुद्रोपि न किञ्चनापि वस्तु हिनस्ति। "एतस्यां ह दिश्येत्यस्येत्यादिकस्याय मर्थः— एतस्य देवस्य रुद्रस्य गृहादुत्तरस्यां दिशि भवन्ति। तस्या दिश्या न हिंसात्मकत्वात्। अत एतदुत्तरार्द्धहोमेन स्वस्या मेव (!) दिशि एनं रुद्रं प्रीणाति स्वस्या मेव तमवयजते पृथक् करोति ॥ १० ॥

स वा अग्नीत्याह स्वाहा करोतीत्यादिना तिसृष्वपिग्नीतिषु स्वाहाकारः क्रियत इत्युपरिष्टादुच्यते तत्र कस्मिन् प्रदेशे स्वाहाकार इति तत्राह— "स वै जानुदघ्न इति। 'जानुदघ्ने' जानुप्रमाण प्रदेशे सोऽध्वर्युः प्रथमं स्वाहाकरोति। तथा सति देशस्याधोदेशत्वादधस्तानां पृथिवीं प्रविष्टान् रुद्रानितेन प्रीणाति ॥ ११ ॥

* का० श्रौ० सू० १८. ११।

एवं 'नाभिदद्घ्नं' 'मुखदघ्नं' च। स्वाहाकारणात्तरिक्षगताद्युलोकं गतांश्चरुद्रान् प्रीणितवान् भवति। लोकत्रयेपि पतिता अश्रुकणाः असङ्ख्याता रुद्राः समभवन्निति प्रागुक्तम्। अथ या अन्या * इत्यादिना स्वाहाकारस्य हविर्लक्षणाग्रप्रदानसाधनत्वेनाग्रस्थाप्येन होमविधानेन एतान् रुद्राननेन प्रीणितवान् भवतीत्याह— "स्वाहाकारेणेति॥ १२, १३ ॥

अथ प्रथमानुवाकस्य प्रथमा मृचं व्याचष्टे— "नमस्त इति। अस्मिन् प्रजापतौ स प्रागुक्तोयमेव 'मन्युर्विततोऽतिष्ठत्'। 'तस्मा' एवैतेन नमस्करोति। यद्यप्यत्र मन्युरेव शतशीर्षा रुद्राः समभवत् इति मन्युरेव रुद्रः समभवदिति मन्यु रेव रुद्रः तथापि 'रुद्र'-शब्देनात्र तदाधारत्वेनाभेदात् प्रजापति रुच्यते। 'इषवे बाहुभ्यां नम' इति। तैरेव 'भीषयमाणो ऽतिष्ठत्' इति। तेभ्य एव नमस्कारं करोति। मन्युरेव शतशीर्षो रुद्रो भूत्वा इषुणा बाहुभ्यां सर्वेषां भय मुत्पादयामसेति तन्निबन्धन भयपरिहाराय तेभ्यः सर्वेभ्यो नमस्कारः क्रियते॥ १४ ॥

"स एष इ * मित्यादिकस्याय मर्थः— प्रजापते रोदनावसरे 'स' मन्युरूपो यो देवः † शतशीर्षो रुद्रो ऽभूत् स एव देवः अत्रं 'विमुड्भ्यो' ये जाता स्त इतरे 'विशः' ततश्च एता विशः 'तस्मै चचार्ये' य एव प्रथमोऽनुवाक एतं पुरस्तादुद्धारं भाग मकुर्वन्।

* 'ग्राम्या'—इति ज।

† 'मन्युरूपमयोरेव'—इति ज।

न च भागिनैकं रुद्रं प्रीणितवन्तः। यथा लोके प्रजा राजभागं दाय प्रीणयन्ति तद्वत्।

अतो यजमानोऽपि तथैव तस्य प्रथमानुवाकलक्षणं भागं कृत्वा तेनैनं तर्पयति। प्रथमानुवाकस्य पुरस्तात् उद्धारः कृतः अत एकदेवत्यः तद्देव प्रदर्शितं रौद्र इति ॥ १५ ॥

प्रथमानुवाके षोडश मन्त्राः तत्र चतुर्दश मन्त्रानवयुत्य स्तौति— "चतुर्दशैतानीति। अधिमासेन सह 'त्रयोदशमासाः संवत्सरः प्रजापतिश्चतुर्दशः' चतुर्दशसङ्ख्यापूर्वकः स पुनः प्रजापति रनन्यात्मक.। ततोऽग्निरपि चतुर्दशः तथा चाग्निर्यत्परिमाणकः अस्य च तादृशोऽपि तत्परिमाणकः तत् परिमाणेनैवानेनाग्न्यात्मकं रुद्रं प्रीणाति। चतुर्दशमन्त्रसाध्यहोमलक्षणेनानेनाग्न्यात्मकं रुद्रं कार्त्स्न्येन प्रीणातीत्यर्थः। मन्त्रे पौनःपुण्ये नमः शब्दः प्रयुज्यते स च पूजावचनत्वेन यज्ञात्मकः, ततश्च 'नमोनम इति'। अनेन यज्ञरूपेणैव नमस्कारेणैनं पूजितवान् भवतीत्याह— "नमोनम इति। नमस्यतीति नमोवरिवश्चित्रं क्वचितमिति नमसः पूजाया मिति वचनात् पूजार्थे क्यच् प्रत्ययः। तस्मादुहेति यस्मान्नमः शब्दो यज्ञः तस्मान्नमस्त इत्येतदयज्ञियं न ब्रूयात्। किन्तु 'यज्ञियं' यज्ञकर्मार्ह मेव ब्रूयात् ततश्च एनं रुद्रं 'यज्ञस्त इति' यथा ब्रूयात् नमस्त इत्यपि तद्वदेवोक्तं भवति ॥ १६ ॥

अथ हन्त्रिभ्यो होमं विधत्ते, "अथेति। "नमो हिरण्यबाहव इत्यादिषु मन्त्रेषु प्रतिपाद्या देवता हन्त्रितः तत्र द्वयोर्द्वयो र्देव-

तयोः प्रतिपादनात् 'दिशाञ्च पतये नम' इत्येतद्धिरण्यबाहवे सेना-न्य ऽइत्येतयो विंशेषणम्। एव मुत्तरत्रापि एकैकस्य विशे-षणाण् यत् द्वयोर्देवतयो * प्रतिपादनं भवति। अमुश्चेचामुश्चेति 'नमो हिरण्यबाहव' इत्यादि इन्द्रिमा निर्देशः, यथा लोके 'असौ त्व' च एष च उभावपि नो 'मा हिंसिष्ट' मिति जनो ब्रूयात् एव मेवायुष्मा ममुष्मा इत्यपि नाभिहितं भवति। लोके 'असौ त्वं च एष च नो मा हिंसिष्ट मित्येव' मभिधानस्य प्रयोजनं दर्शयति। 'विदितो' जातोजन 'आमन्त्रितः' सन् 'नतरां हिनस्ति'। ततश्च प्रकृतेऽपि तद्देवाभिधानात् रुद्रो हिनस्तीति भावः। ततो नैव इंहिनो दर्शयति— "नमो हिरण्यबाहवे" इति। 'एष एव' रुद्र एव 'हिरण्यबाहुः सेनानीः' दिशाम्पतिश्च। अत उक्तो मन्त्रे 'नमो हिरण्यबाहव' इति प्रथमानुवाकः शतशीर्षरुद्रो दैवत्यः। द्वितीयाद्यनुवाका इतररुद्रदेवत्याः। तत्रापि 'यत्किञ्चा-त्रैकदेवत्यं' तदपि शतशीर्षरुद्रस्येत्याह। "यत्किञ्चेति। अत्रापि द्वितीयाद्यनुवाकेष्वपि यत्किञ्चैकदेवत्य मेकवचनान्तमन्त्रसाध्य-होमलक्षणमत्र मस्ति तेनापि एत मेव रुद्रं प्रीणाति। 'ते' तव 'स एष सर्वे देवः' † 'विश इमे ये इतर' ‡ इति उक्त-त्वात्। प्रजाया मपि त' चत्रभाजनं करोति। तस्माल्लोकेऽपि प्रजाया यदन्न मस्ति, तत्रापि चत्रिय सम्बन्धो भागो विद्यते। इषेभ्यो हरिकेशेभ्य इत्यादि बहुवचनान्तमन्त्रप्रतिपादिताभ्यो

---

* "द्वयोरेवदेवतयोः"—इति भ।

†, ‡ पुरस्तादिहैव १५ काण्डे, ए० ५, प० ८, १०।

याभ्यो देवताभ्य एतद्धोमं करोति, ताः पृथिव्यादि लोकात् प्रविष्टा विप्रुड्भ्यो जाता अनेका रुद्र देवताः बहुवचनान्तमन्त्र-साध्यो होमोऽपि विप्रुड्जानां रुद्राणा मित्यर्थः ॥ १७, १८ ॥

हविर्होमानन्तरम् 'जातिभ्यो' जुहुयादित्याह— "अशीति नमः सभाभ्यः सभापतिभ्य इत्यादि प्रतिपादितानि हविर्विशेष-भूतान्येवजातानि एतानि खलु जातान्येतद्रुद्राः प्रविविशुः। तत्र तत्रैवैनान् प्रीणाति। किञ्चैवं 'एतानि रुद्राणां जातानि' खलु देवताविधानं प्रकार मनुष्यस्य मनुष्या भवन्ति। तस्मा-देतानि मनुष्याणा मपि जातानि। अतो मनुष्यजातिभ्यो एव होमे सति देवजातिभ्योऽपि स्यादिति जाते एव तान् रुद्रान् प्रीणाति ॥ १९ ॥

तेषां मन्त्राणां मध्ये केचन उभयतो नमस्काराः, केचनान्य-तरतो नमस्कारा इति। तद्वैपम्ये कारण माह— "तेषां वा इति। अन्यत्र सर्वत्र होमे प्रतिमन्त्रद्रव्यप्रक्षेपे स्वाहाकार इत्यत्रापि तथैव प्राप्तावाह ॥ २० ॥

"स वा इति। स तत्र मध्वर्यु र्मन्त्राणा 'मशीत्यां' सकृत् 'स्वाहा करोति'। 'प्रथमेऽनुवाके च' सकृत् स्वाहा करोति। अथ पुनरशीत्यां तथैवोत्तरत्राशीत्याश्च तत्र प्रथमानुवाके षोड़श-मन्त्राः। तेषां सर्वेषा मन्ते सकृत् स्वाहाकारः। अथ 'नमो हिरण्यवाहव' इत्यारभ्य 'अर्भकेभ्यो नम'* इत्यन्त मेका अशीतिः सम्पद्यते। एकैकस्यां कण्डिकाया मष्टावष्टौ मन्त्राः। 'दिशां च

---

* वा० सं० १६. १७—२६।

पतये नमः' इत्यादिकं विशेषणतया सम्बन्धनीय मिति प्रागे-
वोक्तम् *। तथा च दशसु कण्डिकासु मन्त्राणा मशीतिः सम्पद्यते
'नम स्तक्षभ्य' इत्यारभ्य 'सुधन्वने'† चेत्यन्तं एका अशीतिः सम्प-
द्यते। पुन 'र्नमः स्रुत्याय' इत्यारभ्य 'धनुष्कृद्भ्यश्च वो नमः'‡ इत्येत
देका अशीतिः सम्पद्यते। एतस्या अशीत्या ऊर्द्ध्वं अवदानमन्त्रेभ्यः
पूर्वाणि च यजूंषि सन्ति। एतद्दोत्तरत्र विनियोगाय, प्रति-
निर्द्देष्टुं निर्दिष्टं 'यत्राशीत्या च स्वाहा करोति', यानि 'चोर्द्धानि'
वेति यदुभय निर्दिष्टं तत्राशीतिः प्रशंसति—"अन्न मशीतय
इति अशीति-शब्दः अशिधातुः स्मरणादश्नत्यर्थतमाशीतिषु
स्वाहाकारे अन्नेनैनान् रुद्रान् प्रीणाति ॥ २१ ॥

अथ यानि चेति निर्द्दिष्टानां विनियोग माह—"अथैता-
नीति। "एतद्वाखेत्यादिकस्याय मर्थः—'यथा प्रियः पुत्रो वा
हृदयं वा' 'प्रतिज्ञातमं' अभिमतं 'धाम' स्थानं तद्वदेतत् मन्त्र-
चतुष्टय मपि 'प्रियं धाम तस्मादेतमाहैनाच्छइत' प्राह्वितो
भवति तवैताभि र्व्याहृतिभि र्जुहुयात्। तथा चैतस्य रुद्रस्य प्रियं
धामैव प्राप्नोतीति स देव पश्चादेनं न हिनस्तीति ॥ २२ ॥

मन्त्रान् क्रमेण व्याचष्टे,— "नमो वः किरिकेभ्य इति § एते
हि रुद्रा इदं सर्व मपि जगत् कुर्व्वन्ति। एतेषां प्रजापत्यसुकाय-

* इहैव पुरस्तात् १८ कण्डी, पृ० ६, पं० १०।

† वा० सं० १६, २७—३६।

‡ वा० सं० १६, ३७—४६ क।

§ वा० सं० १६ ४६ ख।

निष्पन्नत्वेन प्रजापत्यात्मकत्वात्। अत एते 'किरिकाः' कर्त्तारः ततस्तादृशेभ्यो वो नमोऽस्त्विति मन्त्रार्थः। "अग्निर्वायु रिति। 'अग्निर्वायुरादित्य' इत्येतानि 'देवानां हृदयानि' यथा हृदयं प्रधानं तद्वद्देतेऽपि प्रधानानीत्यर्थः। अतस्तदात्मकेभ्यो रुद्रेभ्यो नम इत्यर्थः। अत्राग्निर्वायुरादित्यप्रकाशमन्त्रसाहित्येनैतेषां मन्त्राणां व्याहृतिशब्देनाभिधानं; किञ्चाग्निवायुसूर्यदेवानां हृदयानीति तत् प्रकाशकाना मपि मन्त्राणां हृदयत्वं तस्मात्तदभिप्रायेण 'एतद्वास्य प्रतिष्ठातमं धाम वा' यथा प्रियो वा पुत्रो हृदयं इत्युक्तं * विचिन्वन्त एव विचिन्वन्तः; एते हि रुद्रा इदं सर्वं विचिन्वंत्यस्यपरिहारार्थम्। अतस्तत् परिहाराय तेभ्यो नम इत्याह। विचिखन्त एव विचिषन्तः एते रुद्रा यं विचोषं कर्त्तु मिच्छन्ति तं विचिखन्ति। अतश्च तेभ्यो नम इत्याहाजिजय इत्यस्य व्यत्ययेन आमत्यये रूपम्। "एतेह्येति। 'एते' हि रुद्रा एभ्यः' पृथिव्यादिलोकेभ्यो 'निर्हृता' निर्गताः। तत्र विशोर्गेभ्योऽयुक्तेभ्य अत 'आनिर्हतेभ्यो' रुद्रेभ्यो नम इत्याह ॥ २३ ॥

व्याहृतिजपानन्तर एव मुत्तराणि यजूंषि जपेदित्याह "अथेति। तत्र प्रथमं मन्त्रं व्याचष्टे—"एष वा इति। 'यं' जनं 'दिद्रापयिषति कुत्सितं कर्त्तु मिच्छति। तं तथा करोति †। अतएव 'एष' रुद्रो 'द्रापे ऽन्धसः' शब्देन सोमलक्षण मन्नं विवक्षित मित्याह,

---

* पुरस्तात् इहैव २२ कण्डी, पृ० ७, पं० १५।

† 'तं तथैव करोति'—इति भ।

— "सोमस्येति । 'दरिद्रनीललोहितेति' एतान्येतस्य रुद्रस्य 'नामानि च रूपाणि' च भवन्तीति । तस्य नाम गृह्णीत्वैवैनं रुद्रं प्रीणितवान् भवतीत्याह 'दरिद्रेति' । 'आसां प्रजाना मेषां पशूना' मित्येष भागस्तु स्रष्टार्थ इत्याह । "यथैवेति । अथ-ज्ञातरुद्रस्वरूपविषयं शतशीर्षरुद्ररूपाय चनाय प्रथमानुवाक्यम् । पुरस्तादुद्गारमुदहरन् 'नमस्ते रुद्र मन्यव' * इत्येव मनुवाक मुपरिष्टादुद्गार मुहृत्य त मप्रीणत् । तथैव यजमानोऽप्येतदनुवाक-जपेन कृतवान् भवतीत्याह ॥ २४ ॥

"स एष इत्यादिना । यतोऽस्य रुद्रस्यैकोऽनुवाक उद्गारः कृतः तस्मात् स रुद्रैकदेवत्य इत्याह— "तस्मादिति । एतस्मिन्ननुवाके यजुर्गता सप्तत्वसङ्ख्याकार्त्स्न्येन दृष्टिहेतु भवतीत्याह ॥ २५ ॥

"सप्तैतानीति । 'सप्तचितिकोऽग्निः' इत्यनेनैकेन प्रकारेणाग्नेः सप्तत्वसङ्ख्या सम्बन्ध उक्तः । 'सप्तऽर्त्तवः संवत्सरः संवत्सरो ऽग्निः' इत्यनेन प्रकारेण सप्तत्वसङ्ख्यायोगित्वं प्रदर्श्यते । अधि-मासापेक्षया संवत्सरे सप्तऽर्त्तवो भवन्ति । प्रथमानुवाके एत-स्मिन्ननुवाके च मिलिताया यजुःसङ्ख्यास्त्वित्यपीदानीं प्रशं-सति ;— "तान्युभयानीति । चतुर्दशैतानि यजूंषि भवन्तीति । तत्रोक्तत्वात्तानि चतुर्दश चक्त्यानि सप्त च मिलित्वा उभया-न्यपि एकविंशतिः सम्पद्येते । सा चैकविंशति सङ्ख्या 'द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविंश' इति ।

---

* वा० सं० १६. ४७।

यैषा सङ्ख्यासम्पत्तिस्ता अभिलक्ष्य भवति, तथाविधा सङ्ख्यासम्पत्तिरत्र सम्पादिता भवतीत्यर्थः ॥ २६ ॥

अथावततानाख्यान् होमान् कुर्यादित्याह *,— "अथेति। सहस्राणि सहस्रश इत्यादि मन्त्रसाध्या होमा अवतानाः; तेषान्यवतान्यन्ते अवरोह्यन्ते धनूंष्येभिरित्युपविंश इति तत् सञ्ज्ञा। तेषां मुख्य होमे यार्थं प्रयोजनतया दर्शयति— "एतद्वा धनूंष्यवातन्वन्ति आरोपितानि धनूंष्यवरोपितवन्त इत्यर्थः। न ह्यवततेत्यनेनावरोपणस्य प्रयोजनं दर्शितम् ॥ २७ ॥

मन्त्रेषु सहस्रयोजनस्यादग्निहोमेन पदप्रयोगात् परमे दूरे † धनुषा अवरोपणं कृतं भवतीत्याह— तद्वा इति। "अथाग्नेः सह प्रयोजनत्वादग्नि होमेन ‡ सहस्रयोजन एव धनुषा अवरोपणं सम्पादितवान् भवतीत्याह ॥ २८ ॥

"यद्देवेति। अय मग्निः सहस्रयोजन इत्येतद्देवोपपाद्यते। न ह्येतस्मिन् एतद्व्यतिरिक्त मन्यत् किञ्चिदपि च पुष्टसाधकं नास्ति (?)। तस्याग्नेः प्राधान्यात्मकत्वेन सर्वाधिकत्वात्। अतश्चाग्ने सहस्रयोजनत्वेन तत्र होमे सहस्रयोजन एव धनुषा अवरोपणं सम्पादितवान् भवति ॥ २८ ॥

मन्त्र 'असंख्याता सहस्राणि। अस्मिन् महत्यर्णव

* "अथावततानाख्यान् होमा अवतानाः। तेषान्यवतान्यन्ते अनु- कुर्यादित्याह"—इति क, ख।

† 'परमे धुर धनुषा अवरोपणं कृतं भवतीत्याह'—इति क, ख।

‡ 'सहस्राख्यौ होमेन'—इति ख।

इत्येतत् पदप्रयोगस्याभिप्राय माह— "असङ्ख्याता इति। 'यत्र यत्र' स्थाने एते भवन्ति तत्र तत्रैव तेषां मेतैन धनुर्यावरोपयति। 'अर्णवः' शब्देन पृथिव्यादयो लोका विवक्ष्यन्ते। तस्य च महतोत्वनैन कार्त्स्न्यं विवक्ष्यते। एवं च पृथिव्यादिलोकेषु सर्वत्र 'असङ्ख्याता सहस्राणि' अपरिमित सहस्रसङ्ख्याका एते रुद्रा अवतिष्ठन्ते। तेषां सर्वेषा मेव धनुषा मवरोपणं सिध्यतीति ॥ ३० ॥

उक्तां विहितानां मवतानानां होमानां सङ्ख्याविशेषं विधाय प्रशंसति— "दशैतानवतानान् जुहोतीति। 'विराडग्निरिति षष्टिश्च त्रीणि च शतानि यजुष्मत्य इष्टका उपधीयन्ते। ताश्च षड्विंशद्दशकानि भवन्ति। अतएवं दशसङ्ख्यायोगादग्ने र्विराड् ऊर्द्धाधो दिग्भ्यां सह * दिशां दशत्वम्। अग्नेस्तु दिगात्मकत्वं सर्वदिग् व्यापकत्वात् मुखे सप्त प्राणाः, अधो पायूपस्थौ द्वौ नाभि रयम इति 'दश प्राणाः'। प्राणानाञ्च सूत्रात्मकत्वादग्निः प्राणात्मकः एवञ्च सत्यवतानां दशत्वेनाग्न्यात्मकानां रुद्राणां यावत्परिमाणं तावतैवैतानि धनूंष्यवरोपयति। साकल्येन सर्वेषां धनुरवरोपणं कृतं भवतीति भावः ॥ ३१ ॥

अवतानहोमानन्तरं प्रत्यवरोहान् जुहुयात् इत्याह— "अथेति 'नमोऽस्तु रुद्रेभ्य' † इत्यादि मन्त्रसाध्याहोमाः प्रत्य-

---

* "ऊर्द्धाधो दिग्भिः सह"—इति क, ख।

† वा० सं० १६. ६४—६।

वरोहाः, तान् कुर्यादित्यर्थः। तेषा मुपयोग माह,— "एतद्वा इति। एतस्मिन् काले खलु एतेन होमेन 'इमान्' पृथिव्यादीन् 'लोकानित' 'ऊर्द्धी' भूत्वा 'रोहति' 'स' यजमानः 'एतद्वा इत्यनेन वुद्धिस्थः काल परामृश्यते * एव, इ ति च जान्वादि-प्रमाणेषु क्षतो होमः अतश्च 'स रोहः पराङिव' भवति। तदा-रोह्यमाना पृथक्तया तथैवोर्द्ध मेव भवतीत्यर्थः। अतश्च 'देवाः' अस्या पृथिव्याः प्रतिष्ठात्मकत्वात् 'इमां प्रतिष्ठाः' प्रत्यागतवन्तः। अथो यथैव देवाः प्रत्यागतवन्तः तथैवायं यजमानोप्येतेन प्रत्य-वरोहहोमेनेत्यां प्रतिष्ठात्मिकां पृथिवीं प्रत्येति, प्रकारान्तरेण प्रत्यवरोहान् प्रशंसति॥ ३२॥

"यद्देवेति। एतस्मिन् खलु काले एतेन जान्वादिषु प्रमा-णेषु क्षतेन होमेन 'एतद्' रुद्र.न् 'प्रीणन्' अनुगच्छति यज-मानः। अथैतेन प्रत्यवरोहणेन स एव रुद्रेभ्य 'आत्मनं' जीवमये पृथक् करोति। तथा सत्यनेनेदानीं क्रियमाणेन 'एवात्मना' शरीरेण 'सर्व मायुरेति'॥ ३३॥

अथ पुनरपि केनचित्प्रकारेण तानेव स्तौति— "यद्देवेति। पूर्वं जान्वादिप्रमाणेषु क्षतेन होमेन 'इत ऊर्द्धान् रुद्रान् प्रीणाति'। पूर्वं पृथिव्यादि लोकत्रयानुप्रविष्टान् रुद्रान् पृथिवी मारभ्य द्युलोकपर्यन्तं प्रीणाति। इदानीं द्युलोक मारभ्य पृथिवीपर्यन्तं प्रीणातीत्यर्थः। अतएव सूत्रे प्रतिलोमं "प्रत्य-

---

* 'बुद्धिस्थः कालः स्पृश्यते'—इति च।

वरोहान् जुहोति" * इत्युक्तम्। प्रतिलोम्यश्च प्रथमं मुखप्रमाणे पश्चाज्जानुप्रमाणे † होमः ॥ ३४ ॥

अथ प्रत्यवरोहान् प्रदर्शन् व्याचष्टे— "नमोऽस्त्वित्यादिना। 'नमोऽस्तु रुद्रेभ्यो ये दिवीति', ‡ अनेन द्युलोकस्थेभ्यो रुद्रेभ्यो नमस्कारः कृतो भवति। तत्रत्याश्च रुद्रायं हिंसितुं तं 'वर्षेण हिंसन्ति'। अतश्च 'तेषां वो वयं खलु अत एवं मन्त्रे,— 'येषां वर्षमिषव इति'। तेभ्यो दश प्राचीरित्यादिक् तु मन्त्रभागस्त्रयाणा मपि समा इत्युत्तरत्र सकृदेव व्याख्यास्यत इति ॥ ३५ ॥

द्वितीयं मन्त्रं व्याचष्टे— "नमोऽस्तु रुद्रेभ्यो ये ऽन्तरिक्ष ऽइति §। स्पष्टार्थं इति ॥ ३६ ॥

अन्यत् मन्त्रत्रय साधारणम् ‖ ॥ ३७ ॥

"तेभ्यो दशेत्यादिके मन्त्रशेषे पौनः पुन्येन 'दश'-शब्द प्रयोगस्याभिमाह— "दशदशेति। 'दशाक्षरा विराडि'-कस्तु प्रागेव व्याख्यातम् ¶। पूर्वदश प्राचीर्दश दक्षिणेत्यादौ सङ्ख्याम् दिग्विशेषं च पर्यालोच्य सङ्ख्या मात्र मुपजीव्य प्रशंसति ॥ ३८ ॥

---

* का० औ० सू० १८. १. ५।

† 'प्रतिलोम्यश्च प्रथमं मुखमात्रे ततो नाभिमात्रे पुनर्जानुमात्र ऽइति।' का० औ० सू० १८. १. ६।

‡ वा० सं० १६. ६४। § वा० सं० १६. ६१।

‖ वा० सं० १६. ५६।

¶ "दशाक्षरा वै विराट्"—इति प्रस्तात् १ का० १ अ० १ ब्रा० ६२ कण्डौ द्रष्टव्यम्।

"इदानीं तत् सर्व्वं मुपजीव्य प्रशंसति— "यद्देवाहेति। पुटोक्तं करद्वय मञ्जलिरित्युच्यते। तस्य 'या ऽञ्जलेरङ्गुलयो दश' भवन्ति। प्रत्येकं हस्तयोः पञ्चाङ्गुलीनां भावात्। तथा च सति प्राचीरित्यादिना मन्त्रभागेन तेभ्यो 'ऽञ्जलिं' करोति *। होमावसरे तेभ्यो दश प्राचीरित्यादिना मन्त्रभागेन तेभ्यो रुद्रेभ्यः प्राणादि मुखादयः दशाङ्गुलयः कृत इत्यस्यार्थस्य प्रतिपादनात् प्रतिदिग्देवेभ्यो रुद्रेभ्यो ऽञ्जलिं करोति। होमावसरे तेभ्यो दशप्राचीरित्यादि मन्त्रभागकथनेनैव तत्र तत्र दिशि वर्त्तमानेभ्यो रुद्रेभ्यो ऽञ्जलिं कृतवान् भवतीत्यर्थः। "तस्मादु हैतद् इत्यञ्जलिकरणस्य कारणम् प्रदर्श्यते। 'तस्माद्भीतः समेतेनाञ्जलिं करोतीति अथवा एवं व्याख्यातम्। यतोऽसौ यजमानाध्वर्युः मुखेन रुद्रेभ्यो भीतः सन् कृतवान्। तस्मादेतस्मिन् लोकेऽपि जनः भीतो ऽञ्जलिं करोतीति। "तेभ्यो नमो ऽस्त्वित्याद्यवशिष्टमन्त्रभागप्रयोगस्योपयोग माह,— "तेभ्यो नम इत्यादिना। 'त एवेति'; त एव रुद्रा 'अस्मै' यजमानाय 'मृडयन्ति' सुखयन्ति। असौ यजमानोऽयमेव पुरुषं 'द्वेष्टि', यो वैनं यजमानं द्वेष्टि 'त मेषां' रुद्राणां 'जम्भे' मुखे निदधातीत्यर्थः। त मेषां जम्भे दध्म इत्यत्र तमित्यस्य स्थाने अमु मिति प्रयुञ्ज्यादिति कस्यचिन्मतं पूर्वपक्षयितु माह— "अमु मेषा मिति। यं पुरुषं द्विषन्ति तम्। "अमु मेषां जम्भे दध्मः' इति ब्रूयात्। अमु मिति तन्नामनिर्देशः।

---

* "पूजाकर्मणः प्रश्रम पाणी देवान् पूजयन्ति"—निरु० ३. ७. ४।

सतश्च तस्मिन् ह्रियमाणेषु पुनर्नकिञ्चिदप्यस्ति म्रियतेत्यर्थः। उपन्यस्तं मतं निराचष्टे ; अपीति तदुक्तं मत नाद्रियेतेत्यपि कथं तस्य वध्यस्य निर्देशः सेत्स्यतीति तत्राह स्वय मिति यं पुरुषं एवं यं द्विष्म इति विद्वेष्टि स स्वय मेव निर्दिष्टो भवति। नामधेयग्रहणं तन्निर्देशसिध्यर्थं भवति स च निर्देशो यं द्विष्मो यश्च नो द्वेष्टि त मेषा मित्यभिधानादेव सिद्ध इति तथा न कुर्यादित्यर्थः ॥ २८ ॥

अथ प्रत्यवरोहान् जुहोतीति सामान्येन विधानात् सङ्ख्याविशेषे पर्यवसान मभिधत्ते। "त्रिष्कृत्व इति। सा त्रिय सङ्ख्या रुद्राणां साकल्येन तृप्तिहेतु र्भवतीत्याह,— "त्रिहदिति। अग्नेषु त्रिहदिति अग्नेस्तु 'त्रिहृत्' प्रकारः, षष्ठकाण्डेऽभिहितः *। 'अग्निर्यावान् यस्य च मात्रा' यावती 'तावतैवैना नेतद्देनग्न्यात्मकान् रुद्रान् प्रीणितवान् भवति। मन्त्रान्ते स्वाहाकारास्तप्रदानसाधनत्वादन्नरूपेण प्रशंसति, स्वाहाकारेणेति। आरोहणं प्रत्यवरोहणाच्च मिलिता सङ्ख्यां प्रशंसति। त्रिरित इति जान्वादि मुखान्तेषु त्रिषु प्रमाणेषु होमकरणादित ऊर्द्धं त्रिःकृत्वो रोहत्विति पुनश्च त्रि कृत्वः प्रत्यवरोहति तथा सति षट्सङ्ख्या सम्पद्यते। तस्याश्च ब्राह्मणम् 'षड्वा ऋतवः' इत्यादिना प्रागेवोक्त † मित्यर्थः ॥ ४० ॥

प्रकारान्तरेणापि त्रित्व सङ्ख्या मुपपादयति— "यद्वेवेति।

---

* इहैव ६ का० ३ अ० १ ब्रा० २५ कण्डी।

† इहैव पुरस्तात ४ का० ५ अ० ५ ब्रा० १२ कण्डी।

नेःखस्य' ऊर्द्धं मारोहणशक्ता तदनुसारेण निःखस्या एव प्रत्य-रोहणं कृतं भवति। उपपन्नं चैतत्, लोकेऽप्युन्नातिरेकपातः, स्खलनं, किं तत इति चेत्, नैमध्यनस्खेवापर्यासत्वामतिरेके-णाधिक्यापयया पूर्वं मवस्थानं न सुलभ मिति। आरोह सङ्ख्यानु-सारेणैव प्रत्यवरोहेत् सुलभ मितिषेव सङ्ख्योचितेत्यर्थः ॥ ४१ ॥

उक्त होमानन्तरं तद्धोमसाधन 'मर्कपर्णं चात्वाले' प्रक्षिपे-दित्याह,— "अथेति । चात्वालप्रक्षेपस्य कारण माह— "एतद्वा इति । एतस्मिन् काले खलु 'यतिमार्कपर्णमेतद्रौद्रं कर्म करोति'। अतय 'एतद्' पर्णं 'मयाक्तं' भवति। तदिदं मयाक्तं पर्णं कश्चिदपि नाभितिष्ठेत्। तत्र न किमपि छिनत्त्विति। तदेतत् पर्णं ततः करोमि व्यवहितं करोमि। चात्वालस्य गर्त्तत्वादित्यर्थः। अथ पुनरपि तदेव प्रक्षेप मुप-पादयति । "यद्वेवेति । चात्वालाग्न्याधिष्ठानत्वेनाग्नि तत्र प्रक्षिप्तं तदर्कपर्णं 'एष' चात्वालरूपोऽग्निः 'सन्दहति' सम्यग् दहति ॥ ४२ ॥

इत्थं प्रतरुद्रिय होम मभिधायेदानीं तस्य सम्पत्त्यभिधानं प्रतिजानीते। [अथातः सम्पदेवेन सम्पत् सम्पत्तिः केनचित् प्रका-रेण सादृश्य सम्पादनम् ]* । यतः कारणात् कर्मानुष्ठानावसरे सम्पत्तिरनुसन्धातव्या। अतः कारणात् तां सम्पदेवाभिधास्यत इत्यर्थः। एवकारेणात्र होमकरणप्रकारस्य कारणेन विधानं सूचयति सम्पदेव प्रदर्श्यते, न पुनर्होमकरण प्रकारः। तस्य

* बन्धनीचिह्नान्तः प्रदर्शितः पाठो ब-पुस्तकमात्रे अधिकः।

सर्वस्याभिहितत्वादिति । तामेव सम्पत्तिं प्रश्नोत्तराभ्यां दर्शयति— "तदाहु" इत्यादिना । तत् तत्र शतरुद्रियविषये 'अस्य' यजमानस्य एतच्छतरुद्रियं कथं संवत्सरात्मक मग्निं प्राप्नोति' । 'कथं च तेन 'सम्पद्यते' सदृशो भवतीत्याहु र्याज्ञिकाः । एतस्योत्तरं 'षष्टिश्च ह वा' इत्यादि । एतच्छतरुद्रियं षष्ट्युत्तराणि त्रीणि शतानि यजूंषि । पञ्चत्रिंशत् ततः पञ्चत्रिंशदिति । तत्र यानि यानि षष्ट्युत्तराणि त्रीणि च शतानि संवत्सरस्याहान्यपि तावन्ति सम्भवन्ति । ततस्तैः संवत्सरस्याहानि प्राप्नोति । 'अथ यानि त्रिंशत्' यजूंषि मासरात्रीणा मपि त्रिंशत्वात् रात्रीः प्राप्नोति । एवं सति समस्तस्य सर्वस्य संवत्सरस्याधात् तत्संवत्सरात्मकत्वात् उभयात् संवत्सरस्याप्यहोरात्राण्याप्नोति । अथावशिष्टानि यानि पञ्चत्रिंशद्दिवसास्तानि त्रयोदशो मासः स चाधिको मासः संवत्सरस्यात्मा मध्यभागः द्वे यजुषी पादौ प्रतिष्ठाशब्देन पादावुच्येते पुनर्द्वे यजुषी प्राणा इन्द्रियाणि यद्यपि ते प्राणा बहव स्तथापि यानि* पञ्चविंशद्दिनाधिक† मासस्य संवत्सरान्तःपातित्व मभिदधत् तन्मासात्मकेन पञ्चत्रिंशता संवत्सरः करचरणादि-विशिष्ट पुरुषाकारतया प्रदर्श्यते । "एतावानिति । एतत् प्रमाणकः खलु संवत्सरः । एवं च सति संवत्सरे यावती सङ्ख्यास्ति शतरुद्रियेऽपि तावती सङ्ख्या विद्यत इति संख्याद्वारा 'शतरुद्रियं संवत्सर मग्नि माप्नोति' तेन च सदृशो भवति । "एतावत्य

---

* 'याभि' (!)—इति क, ञ, ण ।

† 'पञ्चविंशादित्यद्दिनाधिक॰'—इति ण ।

उभया इत्यादिकस्याय मर्थः,— 'शाण्डिले' शाण्डिलदृष्टेऽस्मिन् 'अग्नौ' (चिन) 'मध्यतो' मध्यप्रदेशे एतावत्यः पञ्चसप्तत्यतत्रय-सङ्ख्याका इष्टका मन्त्रवत्य उपधीयन्ते। इयं च परिगणनो-त्तरस्मिन् काण्डे निधास्यते। इष्टकायामन्यवयवत्वात् पृथगेवा ऽन्वय:। एवञ्च सति सङ्ख्यासामान्यात् शतरुद्रियेणेष्टकारूपा अन्वय:- पृथगेवाहुता भवन्तीति ॥ ४२ ॥

अथ प्रकारान्तरेणापि शतरुद्रियस्य सम्पत्तिः अशीत्युत्तराभ्या माह— "तदाहु इत्यादिना। 'महदुक्थ मिति' प्रयहाजर्तसाह-व्यपदेशं (?) * शस्त्रान्तेनानुशंसनीयं स्तोत्रं पक्ष्याकारं भवति। तच्च पञ्चविंशस्तोम आत्माभागः अतश्चात्रापि अशीतीना मभितोविद्य-मानानि यानि (? तानि) पञ्चविंशति यजूंषि तान्येव महदुक्थे पञ्चविंश स्तोमात्मक आत्मभागः। यद्यपात्र पक्ष्याकारता स्तो-त्रस्यैवेति आत्मभाग इत्यपि तत्रैव तथापि तदनुशंसनात्मके शस्त्रे भेदेनोच्यते। यत्रात्मा भवति तत्रैव शिर. पक्ष पुच्छा-नीत्येतानि भवन्ति। आत्मभागादेव तेषां सर्वेषां सुतत्वेः आत्मभागे तानि सर्वाण्यन्तर्भूतानि। आत्मभागसम्पादना † देव शिरः प्रभृतीन्यपि संगृहीतानि भवन्तीत्यर्थः। अयातः शतरुद्रिये या अशीतयो भवन्ति ताभि र्महदुक्थस्याशीतिभि राख्याता, तत् सम्बन्धिनीना मशीतीना माप्ति र्भवति।

अथ शतरुद्रिये अशीतिभ्यो य देयोर्द्ध मन्त्र जात मस्ति

* "महाव्रते बृहस्पति सहस्र व्यपदेशं"—इति अ।

† "आत्मभागोऽयं यद्वना"—इति भ, अ।

सर्वस्याभिजितत्वादिति । ता मेव सम्पत्तिः प्रश्नोत्तराभ्यां दर्शयति— "तदाहु इत्यादिना । तत् तत्र शतरुद्रियविषये 'कस्य' यजमानस्य एतच्छतरुद्रियं कथं संवत्सरात्मक मग्निं प्राप्नोति'। 'कथं च तेन 'सम्पद्यते' सदृशो भवतीत्याहु र्याज्ञिकाः । एतस्योत्तरं 'षष्टिश्च ह वा' इत्यादि । एतच्छतरुद्रियं षष्ट्युत्तराणि त्रीणि शतानि यजूंषि । पञ्चत्रिंशत् ततः पञ्चत्रिंशदिति । तत्र यानि षष्ट्युत्तराणि त्रीणि च शतानि संवत्सरस्याहान्यपि तावन्ति सम्भवन्ति । ततस्तैः संवत्सरस्याहानि प्राप्नोति । 'अथ यानि त्रिंशत्' यजूंषि मासरात्रीणा मपि त्रिंशत्वात् रात्रीः प्राप्नोति । एवं सति समस्तस्य सर्वस्य संवत्सरवत्प्राप्तत्वात् तत्संवत्सरात्मकत्वात् उभयात् संवत्सरस्याप्यहोरात्राण्याप्नोति । अथावशिष्टानि यानि पञ्चत्रिंशदित्यत्र तानि त्रयोदशो मासः स चाधिको मासः संवत्सरस्यात्मा मध्यभागः द्वे यजुषी पादौ प्रतिष्ठाशब्देन पादावुच्येते पुनर्द्वे यजुषी प्राणा इन्द्रियाणि यद्यपि ते प्राणा बहव स्तथापि यानि * पञ्चत्रिंशदिनाधिक † मासस्य संवत्सरात्मःपातित्व मभिदधत् तन्मासात्मकेन पञ्चत्रिंशता संवत्सरः करचरणादि-विशिष्ट पुरुषकारतया प्रदर्श्यते । "एतावानिति । एतत् प्रमाणक. खलु संवत्सरः । एवं च सति संवत्सरे यावती सङ्ख्यास्ति शतरुद्रियेऽपि तावती सङ्ख्या विद्यत इति संख्याद्वारा 'शतरुद्रियं संवत्सर मग्नि माप्नोति' तेन च सदृशो भवति । "एतावत्

---

* 'यानि' (?)—इति छ, भ, ण।

† 'पञ्चत्रिंशदित्यहिनाधिक॰'—इति ण।

उभया इत्यादिकस्याय मर्थः,— 'शाण्डिले' शाण्डिलदृष्टेऽस्मिन् 'अग्नौ' (चिन) 'मध्यतो' मध्यप्रदेशे एतावत्यः षड्युत्तरशतत्रय-सङ्ख्याका इष्टका मन्त्रवत्य उपधीयन्ते। इयं च परिगणनो-त्तरस्मिन् काण्डे निधास्यते। इष्टकायाश्च्यवयवत्वात् पृथगेवा ऽन्वयः। एवञ्च सति सङ्ख्यासामान्यात् शतरुद्रियेष्टकारूपा अन्वयः- पृथगेवाहुता भवन्तीति ॥ ४३ ॥

अथ प्रकारान्तरेणापि शतरुद्रियस्य सम्पत्तिः प्रश्नोत्तराभ्या माह— "तदाहु इत्यादिना। 'महदुक्थ मिति' मयद्वाजतसाष्ठ-व्यपदेशं (?) * शस्त्राग्नेनानुशंसनीयं स्तोत्रं पक्षाकारं भवति। तत्र पञ्चविंशस्तोम श्वात्माभाग: श्वतथावापि श्वशीतीना मभितोविध-मानानि यानि († तानि) पञ्चविंशति यजूंषि तान्येव महदुक्थे पञ्चविंश स्तोमात्मक आत्मभागः। यद्यपात्र पक्षाकारता स्तो-त्रस्यैवेति आत्मभाग इत्यपि तत्रैव तथापि तदनुशंसनात्मके शस्त्रे भेदेनोच्यते। यथात्मा भवति तत्रैव शिरः पक्ष पुच्छ-मौत्येतानि भवन्ति। आत्मभागादेव तेषां सर्वेषा मुत्पत्तेः आत्मभागे तानि सर्वाण्यन्तर्भूतानि। आत्मभागसम्पादना-देव शिरः प्रभृतोन्यपि संगृहीतानि भवन्तीत्यर्थः। अथातः शतरुद्रिये या श्वशीतयो भवन्ति ताभि र्महदुक्थस्याशीतिभि राख्याता, तत् सम्बन्धिनीना मशीतीना माप्ति र्भवति।

अथ शतरुद्रिये श्वशीतिभ्यो य देवोर्द्ध मन्त्र जात मस्ति

* "महाव्रते इहत्यति सहस्र व्यपदेशं"—इति ग।

† "आत्मभागोऽयं यदता"—इति भ, ग।

॥ अथ द्वितीयं ब्राह्मणम् ॥

अथैन मतः परिषिञ्चति । एतद्वा ऽएनं देवाः शतरुद्रियेण शमयित्वाथैन मेतद्भूय एवाशमयंस्तथै-वैन मेव मेतच्छतरुद्रियेण शमयित्वाथैन मेतद्भूय एव शमयति ॥ १ ॥

अद्भिः परिषिञ्चति । शान्तिर्व्वा ऽआपः शमयत्येवैन मेतत् सर्व्वतः परिषिञ्चति सर्व्वत एवैन मेतच्छमयति त्रिष्कृत्वः परिषिञ्चति त्रिवृदग्निर्यावा-नग्निर्यावत्यस्य मात्रा तावतैवैन मेतच्छमयति ॥ २ ॥

यद्वेवैन परिषिञ्चति । इमे वै लोका एषो ऽग्निरिमांस्तल्लोकानद्भिः परितनोति समुद्रेण हैनां-स्तत् परितनोति सर्व्वतस्तस्मादिमांल्लोकान्सर्व्वतः समुद्रः पर्य्येति दक्षिणावृत्तस्मादिमांल्लोकान् दक्षिणा-वृत् समुद्रः पर्य्येति ॥ ३ ॥

अग्नीत्परिषिञ्चति । अग्निरेष यदाग्नीध्रो नो वा ऽआत्मात्मानꣳ हिनस्त्यहिꣳसाया ऽअश्मनो ऽध्य-

दक्षिणा निरस्यति यं द्विष्यात्तं ते शुगृच्छत्विति य
मेव द्वेष्टि त मस्य शुगृच्छत्यमुं ते शुगृच्छत्विति ब्रू
ब्रूयाद्यं द्विष्यात्ततो ह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत
स्वयंनिर्द्दिष्टो ह्येव स यमेवंविद्द्वेष्टि यदि न भिद्येत
भेत्तवै ब्रूयाद्यदा ह्येव स भिद्यतेऽथ तमृ शुगृच्छति
यं द्वेष्ट्यप्रतीक्ष मायन्त्यप्रतीक्ष मेव तच्छुचं पाप्मानं
जहति * ॥ १२ ॥

प्रत्येत्येष्टका धेनूः कुरुते । एतद्वा ऽएनं देवाः
शतरुद्रियेण चाग्निश्च शमयित्वा शुच मस्य पाप्मान
मपहत्य प्रत्येत्येष्टका धेनूरकुर्व्वत तथैवैन मय मेत-
च्छतरुद्रियेण चाग्निश्च शमयित्वा शुच मस्य पाप्मान
मपहत्य प्रत्येत्येष्टका धेनूः कुरुते ॥ १३ ॥

आसीनः कुर्व्वीतेत्यु हैक ऽआहुः । आसीनो
वै धेनुं दोग्धीति तिष्ठंस्त्वेव कुर्व्वीतेमे वै लोका
एषो ऽग्निस्तिष्ठन्तीव वा ऽइमे लोका अथो तिष्ठन्वै
वीर्य्यवत्तरः ॥ १४ ॥

---

* 'जुहोति' (?),—इति क ।

उदङ् प्राङ् तिष्ठन् । पुरस्ताद्वा ऽएषा प्रतीची यजमानं धेनुरुपतिष्ठते दक्षिणतो वै प्रतीचीं धेनुं तिष्ठन्तीमुपसीदन्ति ॥ १५ ॥

स यत्राभ्याप्नोति । तदभिमृश्यैतद्यजुर्जपतीमा मे ऽअग्न ऽइष्टका धेनवः सन्त्वित्यग्निर्हैतासां धेनुकरणस्येष्टे तस्मादेतावतीनां देवताना मग्नि मेवा मन्त्रयत ऽएका च दश चान्तश्च परार्द्धश्चेत्येष ह्यावराद्ध्यो भूमा यदेका च दश चाथ हैष परार्द्ध्यो भूमा यदन्तश्च परार्द्धश्चावरार्द्धतश्चैवैना एतत् परार्द्धतश्च परिगृह्य देवा धेनूरकुर्व्वत तथैवैना श्रय मेतदव-रार्द्धतश्चैव परार्द्धतश्च परिगृह्य धेनूः कुरुते तस्मादपि नाद्रियेत बह्वीः कर्त्तुममुत्र वा ऽएष एता ब्रह्मणा यजुषा बह्वीः कुरुते ऽथ यत् सन्तनोति कामानेव तत् सन्तनोति ॥ १६ ॥

यद्वेवेष्टका धेनूः कुरुते *। व्याख्या ऽअथ मग्निर्व्वाचा हि चितः स यदाहैका च दश चान्तश्च

* 'कुरुते'—इति ग, घ ।

परार्द्धसेति व्वाग्वा ऽएका व्वाग्दश व्वागन्तो वाक्-
परार्द्धो व्वाच मेव तद्देवा धेनु मकुर्व्वत तथैवैतद्यज-
मानो व्वाच मेव धेनु कुरुते ऽथ यत् सन्त्वोति
व्वाच मेव तत् सन्नमोत्येता मे ऽग्न ऽइष्टका धेनवः
सन्त्व मुत्रा मुष्मिंल्लोक ऽइत्येतद्दा ऽएना अस्मिंल्लोके
धेनूः कुरुते ऽथैना एतद् मुष्मिंल्लोके धेनूः कुरुते
तयो हैन मेता उभयोर्ल्लोकयोर्भुञ्जन्त्यस्मिंश्वा मुष्मिंश्व।
॥ १७ ॥

ऋतव स्थेति। ऋतवो ह्येता ऽऋतावृध ऽइति
सत्यवृध ऽइत्येतदृतुष्ठा स्थ ऽऋतावृध ऽइत्यहोरात्राणि
वा ऽइष्टका ऽऋतुषु वा ऽअहोरात्राणि तिष्ठन्ति घृत-
श्चुतो मधुश्चुत ऽइति तदेना घृतश्चुतश्च मधुश्चुतश्च
कुरुते ॥ १८ ॥

व्विराजो नामेति। एतद्वै देवा एता इष्टका
नामभिरुपाह्वयन्त यथा यथैना एतदाचक्षते ता
एनानभ्युपावर्त्तन्ताथ लोकम्पृणा एव पराच्यस्तस्थुर-
जितनाम्न्यो मिमे मिश्त्यस्ता व्विराजो नामाकुर्व्वत

ता एनानभ्युपावर्त्तन्त तस्माद्दश दशेष्टका ऽउपधाय लोकम्पृणयाभिमन्त्रयते तदेना व्विराजः कुरुते दशाक्षरा हि व्विराट् कामदुघा ऽक्षीयमाणा ऽइति तदेनाः कामदुघा अक्षीयमाणाः कुरुते * ॥ १९ ॥

अथैनं व्विकर्षति । मण्डूकेनावकया व्वेतस-शाखयैतद्वा ऽएन देवाः शतरुद्रियेण चाग्निञ्च शम-यित्वा शुच मस्य पाप्मान मपहत्याथैन† मेतद्रूप एव शमयति‡ सर्व्वतो विकर्षति सर्व्वत एवैन मेतच्छ-मयति ॥ २० ॥

यद्धेवैनं व्विकर्षति । एतद्वै यत्रैतं प्राणा ऋष-योग्रे ऽग्निꣳ समस्कुर्व्वंस्त मद्भिरवोक्षंस्ता आपः सम-स्कन्दंस्ते मण्डूका अभवन् ॥ २१ ॥

ताः प्रजापति मब्रुवन् । यद्वै नः कमभूदवाक्-

---

* 'कुरुते'—इति ग ।

† 'मघत्याथैन'—इति ग, घ ।

‡ "शमयंस्तथैवैन मथ मेतच्छतरुद्रियेण चाग्निञ्च शमयित्वा शुच मस्य पाप्मान मपहत्याथैन मेतद्रूप ऽएव शमयति"—इत्यधिको पाठः क, ख, ङ पुस्तकेषु ।

दगाद्दिति सोऽब्रवीदेष व ऽएतस्य व्वनस्पतिर्व्वेत्विति व्वेत्तु संवेत्तु सोऽह वै तं व्वेतस ऽइत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा ऽअथ यदब्रुवन्नवाङ्नः कमगाद्दिति ता ऽअवाका ऽअभवन्नवाका ह वै ता अवका ऽइत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्ता हैताः स्वय्य ऽआपो यन् मण्डूको ऽवका व्वेतसशाखेताभिर्देवैन मेतत् त्रयीभिरद्भिः शमयति ॥ २२ ॥

यद्वेवैनं व्विकर्षति। जायत ऽएष ऽएतद्यच्चीयते स ऽएष सर्व्वस्मा ऽअन्नाय जायते सर्व्वम्वेतदन्नं यन् मण्डूको ऽवका वेतसशाखा पशवस्त्वेता आपश्च व्वनस्पतयश्च सर्व्वेणैवैन मेतदन्नेन प्रीणाति ॥ २३ ॥

मण्डूकेन पशूनाम्*। तस्मान् मण्डूकः पशूनामनुपजीवनीयतमो यातयामा हि सो ऽवकाभिरपां तस्मादवका अपा मनुपजीवनीयतमा यातयाम्न्यो हि ता व्वेतसेन व्वनस्पतीनां तस्माद्वेतसो व्वनस्पतीना मनुपजीवनीयतमो यातयामा हि सः ॥ २४ ॥

---

* पशूनाम्—इति ग घ।

तानि व्यृष्टे प्रबध्य। दक्षिणार्द्धमाग्नेरन्तरेण परिश्रितः प्रागग्रे विकर्षति समुद्रस्य त्वावकयाग्ने परिव्ययामसि पावको ऽअस्मभ्यꣳ शिवो भवेति समुद्रियाभिस्त्वाद्भिः शमयाम इत्येतत् * ॥ २५ ॥

अथ जघनार्द्धेनोदक्। हिमस्य त्वा जरायुणाग्ने परिव्ययामसि पावको ऽअस्मभ्यꣳ शिवो भवेति यद्वै शीतस्य प्रशीतं तद्धिमस्य जरायु शीतस्य त्वा प्रशीतेन शमयाम इत्येतत् † ॥ २६ ॥

अथोत्तरार्द्धेन प्राक् ‡। उप ज्मन्नुप वेतसे ऽवतर नदीष्वा § अग्ने पित्तमपामसि मण्डूकि ताभिरागहि सेमन्नो यज्ञं पावकवर्णꣳ शिवं कृधीति यथैव यजुस्तथा बन्धुः ॥ २७ ॥

अथ पूर्व्वार्द्धेन दक्षिणा ‖। अपा मिदं न्ययनꣳ समुद्रस्य निवेशनम् अन्यांस्ते ऽअस्मत्तपन्तु हेतयः

---

*, † 'इत्येतत्'– इति ग, घ।

‡ 'प्राक्'—इति ग, घ।

§ 'नदीष्वा'—इति ग, 'नदीष्वा'—इति घ।

‖ 'दक्षिणा'—इति ग, 'दक्षिणा'—इति घ

पावको ऽस्मभ्यꣳ शिवो भवेति यथैव यजुस्तथा बन्धुरित्यग्रे व्विकर्षत्यथेति यथेत्यथेति तद्द्विचाहृत्तद्धि देवता * ॥ २८ ॥

आत्मान मध्ये व्विकर्षति। आत्मा ह्येवाग्रे सम्भवतः सम्भवत्यथ दक्षिणं पक्षमथ पुच्छमथोत्तरं तद्द्विचाहृत्तद्धि देवत्रा † ॥ २९ ॥

अभ्यात्मं पक्षपुच्छानि व्विकर्षति। अभ्यात्ममेव तत्कान्तिं धत्ते परस्तादर्व्वाचपरस्तादेव तदर्व्वाचीꣳ शान्तिं धत्तेऽग्ने पावक रोचिषेति दक्षिणं पक्षꣳ स नः पावक दीदिव इति पुच्छं पावकया यश्चितयन्त्या कृपेत्युत्तरं पावकं पावकमिति यद्वै शिवꣳ शान्तं तत् पावकꣳ शमयत्येवैन मेतत् ॥ ॥ ३० ॥

सप्तभिर्व्विकर्षति। सप्तचितिकोऽग्निः सप्तऽर्त्तवः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य

---

* 'देवत्रा'—इति ग, घ।

† 'देवत्रा' इति ग, देवत्रा'—इति घ।

त्वा तावतैवैन मेतद्विकर्षति तं व्यूथ मुत्करे-
द्यस्य * ॥ ३१ ॥

 अर्धेनं सामभिः परिगायति †। अत्रैष सर्व्वो-
ग्नि. संस्कृतस्तस्मिन् देवा एतदमृतं रूप मुत्तम
मदधुस्तथैवास्मिन्नय मेतदमृतं रूप मुत्तम दधाति
सामानि भवन्ति प्राणा वै सामान्य मृतमु वै
प्राणा अमृत मेवास्मिन्नेतद्रूप मुत्तमं दधाति सर्व्वतः
परिगायति सर्व्वत ऽएवास्मिन्नेतदमृतं रूप मुत्तमं
दधाति ॥ ३२ ॥

 यद्वेवैनं सामभिः परिगायति। एतद्वै देवा
अकामयन्तानस्थिक मिम ममृत मात्मानं कुर्व्वीमहीति
ति ते ऽब्रुवन्नुप तज्जानीत यथेम मात्मान मनस्थि-
क ममृतं करवामहा ऽइति ते ऽब्रुवंश्चेतयद्ध मिति
चिति मिच्छतेति वाव तदब्रुवंस्तदिच्छत यथेम-
मात्मान मनस्थिक ममृत करवामहा ऽइति ॥ ३३ ॥

* व्यस्य'—इति क, व्यस्य'—इति ख, व्यस्य'—इति ग, घ।
† परिगायति'—इति क।

ते चेतयमाना । एतानि सामान्यपश्यंस्तैरेनं पर्यगायंस्तैरेत मात्मान मनस्थिक ममृत मकुर्व्वत तथैवैतद्यजमानो यदेनᳪ सामभिः परिगायत्येत मेवैतदात्मान मनस्थिक ममृतं कुरुते सर्व्वतः परिगायति सर्व्वत एवैतदेत मात्मान मनस्थिक ममृतं कुरुते तिष्ठन् गायति तिष्ठन्तीव वा इमे लोका अथो तिष्ठन्वै वीर्य्यवत्तरो हिङ्कृत्य गायति तत्र हि सर्व्वं कृत्स्नᳪ साम भवति ॥ ३४ ॥

गायत्रं पुरस्ताद्गायति । अग्निर्व्वै गायत्र मग्नि मेवास्यैतच्छिर करोत्यथो शिर एवास्यैतदनस्थिक ममृत करोति ॥ ३५ ॥

रथन्तर दक्षिणे पक्षे । इयं वै रथन्तर मियमु वा एषा लोकानाᳪ रसतमो ऽस्याᳪ हीमे सर्व्वे रसा रसन्तमᳪ ह वै तद्रथन्तर मित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा इमा मेवास्यैतद्दक्षिणं पक्ष करोत्यथो दक्षिण मेवास्यैतत्पक्ष मनस्थिक ममृत करोति ॥ ३६ ॥

बृहदुत्तरे पक्षे * । द्यौर्वै बृहद् द्यौर्हि वर्हिष्ठा दिव मेवास्यैतदुत्तरं पक्षं करोत्यथो ऽउत्तर मेवास्यै-तत् पक्ष मनस्थिक ममृतं करोति ॥ ३७ ॥

वामदेव्य मात्मन् । प्राणो वै वामदेव्यं वायुः प्राणः सर्व्वेषा मु ह्येष देवाना मात्मा यद्वायुर्व्वायुमेवास्यैतदात्मानं करोत्यथो ऽआत्मान मेवास्यैतदनस्थिक ममृतं करोति ॥ ३८ ॥

यज्ञायज्ञियं पुच्छम् । चन्द्रमा वै यज्ञायज्ञियं यो हि कश्च यज्ञः सन्तिष्ठत ऽएत मेव तस्याहु-तीनाᳬ रसोऽप्येति तद्यदेतं यज्ञो-यज्ञो ऽप्येति तस्माच्चन्द्रमा यज्ञायज्ञियं चन्द्रमस मेवास्यैतत् पुच्छं करोत्यथो पुच्छमेवास्यैतदनस्थिक ममृतं करोति † ॥ ३९ ॥

अथ प्रजापतेर्हृदयं गायति । असौ वा ऽआ-दित्यो हृदयᳬ श्लक्ष्ण एष श्लक्ष्णᳬ हृदयं परि-मण्डल एष परिमण्डलᳬ हृदय मात्मन् गायत्या-

---

* 'पक्षे'—इति ग, 'पक्षे'—इति घ ।

† 'करोति'—इति ख ।

ति चेतयमाना: । एतानि सामान्यपर्य्यास्तैरेनं पर्यगायंस्तैरेत मात्मान मनस्थिक ममृत मकुर्व्वत तथैवैतद्यजमानो यदेनए सामभिः परिगायन्त्येत मेवैतदात्मान मनस्थिक ममृतं कुरुते सर्व्वतः परिगायति सर्व्वत एवैतदेत मात्मान मनस्थिक ममृतं कुरुते तिष्ठन् गायति तिष्ठन्तीव वा इमे लोका अथो तिष्ठन्वै वीर्य्यवत्तरो हिङ्कृत्य गायति तत्र हि सर्व्वं कृत्स्नए साम भवति ॥ ३४ ॥

गायत्रं पुरस्ताद्गायति । अग्निर्व्वं गायत्र मग्नि मेवास्यैतच्छिरः करोत्यथो शिर एवास्यैतदनस्थिक ममृतं करोति ॥ ३५ ॥

रथन्तर दक्षिणे पक्षे । इयं वै रथन्तर मिय मु वा एषां लोकाना ए रसतमो ह्यस्याए ही मे सर्व्वे रसा रसन्तमए ह वै तद्रथन्तर मित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा इमा मेवास्यैतद्दक्षिणं पक्ष करोत्यथो दक्षिण मेवास्यैतत्पक्ष मनस्थिक ममृत करोति ॥ ३६ ॥

इहदुत्तरे पत्ते * । द्यौर्व्वै बृहद् द्यौर्हि वर्हिष्ठा दिव मेवास्यैतदुत्तरं पत्तं करोत्यथो ऽउत्तर मेवास्यैतत् पत्त मनस्थिकं ममृतं करोति ॥ ३७ ॥

वामदेव्य मात्मन् । प्राणो वै वामदेव्यं वायुरु प्राणः सर्व्वेषा सु ह्येष देवाना मात्मा यद्वायुर्व्वायुमेवास्यैतदात्मानं करोत्यथो ऽयात्मान मेवास्यैतदनस्थिक ममृतं करोति ॥ ३८ ॥

यज्ञायज्ञियं पुच्छम् । चन्द्रमा वै यज्ञायज्ञियं यो हि कश्च यज्ञः सन्तिष्ठत ऽएत मेव तस्याहुतीनाᳬ रसोऽप्येति तद्यदेतं यज्ञो-यज्ञो ऽप्येति तस्माच्चन्द्रमा यज्ञायज्ञियं चन्द्रमस मेवास्यैतत् पुच्छं करोत्यथो पुच्छमेवास्यैतदनस्थिक ममृतं करोति † ॥ ३९ ॥

अथ प्रजापतेर्हृदयं गायति । असौ वा ऽआदित्यो हृदयᳬ श्लक्ष्ण एष श्लक्ष्णᳬ हृदयं परिमण्डल एष परिमण्डलᳬ हृदय मात्मन् गायत्या-

* 'पक्षे'—इति ग, 'पक्षे—इति घ ।

† 'करोति'—इति ख ।

त्मन् हि हृदयं निकक्षे निकक्षे हि हृदयं दक्षिणे निकक्षेऽतो हि हृदयं नेदीय आदित्य मेवास्यैतद्धृदयं करोत्यथो हृदय मेवास्यैतदग्नाविक ममृतं करोति ॥ ४० ॥

प्रजासु च प्रजापतौ च गायति । तद्यत् प्रजासु गायति तत् प्रजासु हृदयं दधात्यथ यत् प्रजापतौ गायति तदग्नौ हृदयं दधाति ॥ ४१ ॥

यद्वेव प्रजासु च प्रजापतौ च गायति । अयं वा अग्निः प्रजाश्च प्रजापतिश्च तद्यदग्नौ गायति तदेव प्रजासु च प्रजापतौ च हृदयं दधाति ॥ ४२ ॥

ता हैता अमृतेष्टकाः* । ता उत्तमा उपदधात्यमृतं तदस्य सर्व्वस्योत्तमं दधाति तस्मादस्य सर्व्वस्यामृत मुत्तमं नान्यो ऽध्वर्य्योर्गायेदिष्टका वा ऽएता व्विचितो ह स्याद्यदन्यो ऽध्वर्य्योर्गायेत् ॥ ४३ ॥ २ ॥

॥ इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥

---

* 'अमृतेष्टकाः' -इति ग, घ ।

पूर्वस्मिन् ब्राह्मणे शतरुद्रीयहोमोऽभिहितः अथास्मिन्नग्नौ परिषेकधेनुकरणाश्विकर्षणादिकं कर्माभिधास्यते। कात्यायनः,— "क्षियं परिषिञ्चत्यग्नीद्दक्षिणे निकक्षेऽद्रिं कृत्वाश्मन्नूर्जमित्यद्रेरधि" *—इति आग्नीध्रो दक्षिणकक्षप्रदेशे पाषाणं निधाय "अश्मन्नूर्ज" † मिति मन्त्रेण पाषाणस्योपरि स्थित्वाग्निं परिषिञ्चेदिति सूत्रार्थः तमेतं परिषेकं विधत्ते— "अथेति। यतः कारणात् अभिषिक्तोऽग्निः रुद्ररूपत्वादशान्तः अत एनं शमयितुं परिषिञ्चेत् ननु शान्तस्याग्नेः रुद्ररूपत्वेनाशान्तस्य शमनार्थमेव शतरुद्रीयहोमः। अतएवोक्तं "तस्मा एतदन्नं समभरञ्छान्तदेवत्यम्" ‡ इति अतः किमर्थं पुनः शमनार्थं परिषेकस्य विधानम्? न हि शान्तः पुनरपि शान्तिमपेक्षते। न हि भुक्तवान् भोजनमपेक्षत इत्यत आह— "एतद्वा इति। एतदिति देवानां कर्मानुष्ठानावसरपरामर्शः। एतस्मिन्नवसरे ते देवा अशान्तमेवमग्निं शतरुद्रियेण शमयित्वाथैतेन परिषेकेण भूय एवाधिकमेवाशमयन् अतो यथैव देवा अकुर्वन् तथैवायमपि यजमानः शतरुद्रियेण शान्तमपि पुनरधिकशमनार्थं परिषिञ्चति। अतः शमनाधिक्यार्थत्वात् परिषेकोऽत्रावश्यं विधेय इति भावः। "अथैनमतः परिषिञ्चति"—इति सामान्यविधानात्प्रथम आदितोऽपि परिषेकः

* का० श्रौ० सू० १८. ५. १।
† वा० सं० १७ १।
‡ द्रष्टव्य पुरस्तात् १ ब्रा०, २ क०, पृ० २



त्यादिशेत्याह,— "अग्निरिति ।" परिषेकस्य शमनार्थत्वादयमग्न्यादिगतसन्तापशमनक्षमत्वेन शान्तित्वादद्भिः सम्पादितेन परिषेकेणैनं शमयति ॥ १ ॥

"अद्भि" रपि कश्चिदेवपरिषेकेसाकल्येन शमनं न सेत्स्यतीत्याह, — "सर्वत" इति । सकृत् कृते शास्त्रार्थ इति न्यायेन सकृदपि परिषेके कृते परिषेकविधिस्त इत्यर्थः । त्यादित्यभिप्रेत्य तदावृत्तिं सङ्ख्यां दर्शयति । 'त्रिः खल्व' इति । त्रित्वसङ्ख्याया कार्त्स्न्येन शमनहेतु इत्याह,— "त्रिष्टदग्नि" रिति अथ तमेव परिषेकं प्रकारान्तरेण प्रशंसति ॥ २ ॥

"यद्वेवैन मिति । एष सञ्चितोऽग्निः प्राजापत्यात्मकत्वेन प्रजापतेय सर्वलोकहेतुत्वेन तदात्मकत्वात् 'इमे' पृथिव्यादयो लोकाः खलु एतस्य तादृशस्याग्नेः परिषेकेण इमानेव 'लोकानद्भिः परितनोति' परिवेष्टयति । समुद्रस्याबात्मकत्वादद्भिः परिषेके समुद्रेणैवेमान् लोकान् परिवेष्टयति । स च परिषेकः 'सर्वतः' सम्पादित इति समुद्रोऽपीमान् लोकान् सर्वतः (पर्येति पृथिव्याः समुद्रेण वलयत्वात् अन्तरिक्षद्युलोकयोः पृथिव्या मुपरिवर्त्तमानत्वात् पृथिव्यादीन् सर्वान् लोकान् सर्वः समुद्रः पर्येतीत्युच्यते सर्वत) * परिषेकः सव्यावृदपि कर्त्तुं शक्यत इत्यत आह — 'दक्षिणावृदिति । अतः प्रादक्षिण्यक्रमेण परिषेकः सम्पादितः अतः समुद्रोऽपि तथैव पर्येति ॥ ३ ॥

* बन्धनीचिह्नान्तःप्रदर्शितः पाठो न पुस्तकमात्रे अधिकः ।

समाख्याविनियोगाच्चाध्वर्युः परिषेक्ता प्राप्तापवाद माह —“अग्नीदिति । अथ कस्मादध्वर्युंपरित्यागेनाग्नीध्रः परिगृह्यत इत्यत्राह* अग्निरेष इति परिषेक्तव्यस्याग्नेरग्निमनेन चयत्वादध्वर्यो परिषेक्तरितो † हिंसा सम्भविता स्यात् अग्नीध्रस्य पुनरन्यत्मकत्वेन आत्मनैवात्मनो हिंसाया असम्भवात्तस्मै तस्य परिग्रह इत्यर्थः। परिषेकावसरे दक्षिणे निकाशे कञ्चित् पाषाण निधाय तत आरभ्यत इत्याह। “अश्मनोधीत्यादिना। निकाशः कक्ष प्रदेशः तत् सन्धिस्थानं। लोकेऽपि पर्वतादिषु दक्षिणात्पाषाणसन्धिस्थानाद् सर्वत स्रोतस्स्थाने (?) पाषाणं निधाय तत आरभ्य परिषिञ्चेत् इत्यर्थः॥ ४॥

इत्थं प्रकारं परिषेकं विधाय अथ तत्र मन्त्रं प्रदर्शन् व्याचष्टे— “अश्मन्नूर्जं मिति ‡। आप इति यत् ‘एषा पर्वतस्य अश्मनि ‘स्थिता अर्कस्य पर्वतेषु पाषाणसन्धिभ्यो या सुष्टु सततास्तन्नूर्जं मित्येषभागो य एवाभिधत्ते। ‘गिरिश्रयाणा मिति श्रयति प्राप्नोति इयङ् देये च रूपम्। उत्तरच ‘इरावा’ इत्येतदपि निजस्वं पदम्। ‘अद्भ्य ओषधीभ्य इत्यतत् मन्त्र भागपरिपाठ्योर्थः प्रसिद्ध इत्याह,— “एतस्माद्धीति। ‘पयः’ क्षीरं तच्च अनादिभ्यः सम्पाद्यन्ते इत्येतत् प्रसिद्ध मेव अपसु्रव्यौषधीभ्यो सोम्यः सद्दुत्पद्यतेरिति। ‘तां न इषं’ इत्यनेन भागो न

---

* ‘इत्यत आह’—इति ज, भ। इत्यत्राह’—इति छ, ण।

† ‘अयदध्वर्यो (?) परिषेक्तरि मो (?)’–observed by Dr. Webber.

‡ वा० सं० १७. १।

स्यादित्यत आह,— "अग्निरिति। परिषेकस्य शमनार्थत्वादय आग्न्यादिष्वसन्तापशमनक्षमत्वेन शान्तिरापस्ताभिरद्भिः सम्पादितेन परिषेकेणैनं शमयति ॥ १ ॥

"अद्भि' रपि कश्चिदेवपरिषेकैसाकल्येन शमनं न सेत्स्यतीत्याह,— "सर्वत" इति। सकृत् कृते शास्त्रार्थ इति न्यायेन सकृदपि परिषेके कृते परिषेकविधिस्य इत्यर्थः। स्यादित्यभिप्रेत्य तदावृत्ति सङ्ख्यां दर्शयति। 'त्रि: क्रत्व' इति। त्रित्वसङ्ख्यस्य कार्त्स्न्येन शमनहेतु इत्याह,— "त्रिवृदग्नि" रिति अथ त मेव परिषेकं प्रकारान्तरेण प्रशंसति ॥ २ ॥

"यद्वेवैन मिति। एष सञ्चितोऽग्निः प्राजापत्यात्मकत्वेन प्रजापतेश्च सर्वलोकहेतुत्वेन तदात्मकत्वात् 'इमे' पृथिव्यादयो लोकाः खलु अतश्च तादृशस्याग्नेः परिषेकेण इमानेव 'लोकानद्भिः परितनोति' परिवेष्टयति। समुद्रस्याबात्मकत्वादद्भिः परिषेके समुद्रेणैवैनान् लोकान् परिवेष्टयति। स च परिषेकः 'सर्वत' सम्पादित इति समुद्रोपीमान् लोकान् सर्वतः (पर्येति पृथिव्याः समुद्रेण वलयत्वात् अन्तरिक्षद्युलोकयोः पृथिव्या मुपरिवर्त्तमानत्वात् पृथिव्यादीन् सर्वान् लोकान् सर्वः समुद्रः पर्येतीत्युच्यते सर्वत )* परिषेकः सव्यावृदपि कर्त्तुं शक्यत इत्यत आह— "दक्षिणावृदिति। अतः प्रादक्षिण्यैक्रमेण परिषेकः सम्पादितः अतः समुद्रोऽपि तथैव पर्येति ॥ ३ ॥

---

* अस्मनीचिह्नान्तः प्रदर्शित. पाठो ज-पुस्तकमात्रे अधिकः।

समाख्याविनियोगादाध्वर्यो: परिषेक प्राप्तापवाद माह ,—"अग्नीदिति । अथ कस्मादध्वर्युपरित्यागेनाग्नीध्र: परिगृह्यत इत्याह * अग्निरेष इति परिषेतव्यस्याग्नेरगमनेन क्षय-त्वादध्वर्यो परिषेक्तरि सति † हिंसा सम्भविता स्यात् अग्नीध्रस्य पुनरग्न्यात्मकत्वेन आत्मनैवात्मनो हिंसाया असम्भवादहिंसार्थं तस्य परिग्रह इत्यर्थ:। परिषेकावसरे दक्षिणे निकने कश्चित् पाषाणं निधाय तत आरभ्यत इत्याह। "अश्मनोऽभीत्यादिना"। निकक्ष: कक्ष प्रदेश: तत् सन्धिस्थानं। लोकेऽपि पर्वतादिषु दक्षिणात्पाषाणसन्धिस्थानाद् सर्वत लोकस्थस्थानि (?) पाषाणं निधाय तत आरभ्य परिषिञ्चेत् इत्यर्थ: ॥ ४ ॥

इत्थं प्रकारं परिषेकं विधाय अथ तत्र मन्त्रं प्रदर्शन् व्याचष्टे— "अश्मन्नूर्ज मिति ‡। आप इति यत् 'एषा' पर्वतेष्व-श्मनि 'श्रिता ऊर्करस: पर्वतेषु पाषाणसन्धिभ्यो या सुत्यन्ति: स्रवताश्मन्नूर्ज मित्येषभागो य एवाभिधत्ते। 'गिरिश्रयाणा मिति श्रयते: श्रानचि इयङ्देशे च रूपम्। उत्तरत्र 'दरााणा' इत्येतदपि निजन्तं पदम्। "अद्भ्य ओषधीभ्य इत्यतत् मन्त्र भागपरिपाद्योर्थ: प्रसिद्ध इत्याह ,— "एतस्माद्धेति। 'पय:' क्षीरं तच्च धनादिभ्य: सम्पाद्यन्ते इत्येतत् प्रसिद्ध मेव अभात्युन्न-वतीभ्यो गोभ्य: स्यादुत्पत्तेरिति। 'तां न इषं' इत्यनेन भागो न

---

* 'इत्यन व्याह'—इति ज, झ। इत्यत्राह'—इति छ, ण।

† 'क्षयदध्वर्यौ (?) परिषिञ्चति नी (!)'—observed by Dr. Webber.

‡ वा० सं० १७. १।

"उदकस्योदः सञ्ज्ञायाम्" * इत्युदादेशः । तन्निधाय विवरं विपस्यते प्रतिपर्य्येति । सम्याहृत्येवेति विपस्ययत इति "उपसर्गस्थात्यतामिति नत्वं" † किमर्थं विपर्यय मित्याह — "एतदा इति । एतस्मिन्नवसरे खलु एन मग्निं समस्तात्पर्य्येतीति । यत एतेनेनए लघुयति लघुमिवाचरति अतस्तया शरीरेऽग्नि हिंस्या-दिति । अहिंसायै तत्रा एवाग्नये मिङ्गुनं स्कृतं तन्निपय मप राध मपमार्ष्टीत्यर्थः । लघूय तीति उपमानादाचरति इति क्यच् प्रत्ययः ‡ । "तस्मा इति । "श्लाघह्नुङित्य दिना सम्प्रदान सञ्ज्ञाया चतुर्थी ; § इत्यर्थः प्रकारान्तरेणापि विपर्ययण प्रशंसति ॥ ६ ॥

"यद्वेति । प्रदक्षिणप्रकावसरे तेनाग्नि मनुगतो भवतीति विपर्ययणात् । सत एव जीवनायात्मानं पृथक् करोति । तथा सत्ये नेदानीं म्रियमाणेन शरीरेणैव 'सर्व मायुः' प्राप्नोति ॥ ७ ॥

विपर्ययणस्य शिवारं करणं प्रशंसति,—

शिविंपस्ययत इति ॥ ८ ॥

शिवारं पर्येत्य प्रचात् सात्मानं कुम्भं नैऋत्यां दिशि प्रक्षिपेदित्याह ,—

"अथेति । "एतां दिशए" नैऋतीं दिशं हस्तेनाभिनीय दर्श-यति । "एषा नैऋती' दिगिति विवरणात् ॥ ९ ॥

---

* पा० सू० ६. ३. ५७ ।
† पा० सू० ८. १. १९ ।
‡ पा० सू० ३. १. १० ।
§ पा० सू० १. ४. ३४ ।

"एतद्वा इति। पूर्वं देवा एतमग्निं 'शतकद्रियेण चाग्निं च समयित्वाय' अग्नेरेनोक्तप्रदेशे प्रक्षेपेण शोकरूपं पापं हतवन्तः। अतो यजमानोऽपि तत्र प्रक्षेपेण तथैव कृतवान् भवति ॥ १० ॥

प्रक्षेपानन्तरं हरणप्रसङ्गे अग्नेर्बाह्यभागेन हरेदित्याह,— "बाह्येनाग्निमिति। तथा हरणेन शोकः पृथिव्यादिलोकेभ्यो बहिर्गतो भवतीत्याह,— 'इमे वा इति। अग्नेः पृथिव्यादिलोकत्रयात्मकत्वं प्राजापत्यात्मकत्वात् तथैव वेदेरपि बहिर्हरणमभिधाय प्रशंसति। "बहिर्वेदीति ॥ ११ ॥

उक्तप्रकारेण साश्मानं कुम्भं कृत्वा 'वेदेर्दक्षिणस्यां श्रोण्यां' माशुर्ह्मिष्ठन् यं द्विष्म' इत्यनेन मन्त्रेण दक्षिणतो निरस्येदित्याह। "स वा इत्यादिना। उक्तं मन्त्रेण निरसने मन्त्रार्थस्याथ फलतो चाह,— 'य मेदिति। अमुं ते शुग्च्छत्वित्यादिकन्तु प्रागेव व्याख्यातम्। निरस्तस्य तस्याश्मनो भेदनं कुर्यादिति तदाह। यदीति। भेत्तवै भेत्तुं गच्छन्त्वर्थेत्यादि सूत्रेण तुमर्थे तवै प्रत्ययः। निरसनेनाभिन्नस्य तस्य बालोद्भेदनेन किं लभ्यत इति तत्राह। यदा भाति यत्र 'यदि न भिद्येत भेत्तवै ब्रूयाद्' इति सामान्येन च तद्भेदनं अश्मविषयमुदकुम्भविषय इति निर्णयो दृश्यते। अतोऽत्र विचार्यते, किं मेतद् भेदनं कुम्भविषयं मश्मविषयं एवेति। किं तावत् प्राप्तं सामर्थ्यात् कुम्भविषयं मेतद्भेदनं नाश्मविषयं, कुत एतत् एव मेतद्भेदयन समर्थं भवति। यदि न भिद्येत भेत वै ब्रूयादिति।

पर्द्रोत्वे समर्थं मेव न हि तस्य काठिनत्वात् भेदन माप्यत इति पासोऽभिधीयते *। अश्मविषय मेतद्भेदनं प्रतिपत्तव्यम् †। न कुम्भ विषयम्। कुत एतत् अर्थवादात् यदा ह्येव स भिद्यतेऽथैतां क्षुधं गच्छति। यं द्वेष्टीति ॥ १२ ॥

सा च शुगश्मनि निहिता तदश्मनि क्षुधं ‡ दधातीति। किञ्च आश्मनिवाश्मभेदनं कुम्भे भेदनं सामर्थ्यादश्मनिर्वीर्यवादाद्वाश्च-त्वाच्चेति पैंशुकरणं नाम वक्ष्यमाण मन्त्रजपपूर्वकं पैंशुरूपेणानु-सन्धानम् घृतकृद्भियादि कुम्भनिरसनान्तं कर्मकृत्वा प्रत्येत्य देवेर्धंशुकरणाद्यनन्तरोऽपि एतेन तथैव कृतवान् भवतीत्याह,— 'एतद्वा' इति ॥ १३ ॥

विहितं पैंशुकरणं आसीनेन सम्पाद्य मिति केषाञ्चिच्छाखिनां सोपपत्तिकं मतं पूर्वपक्षयितुं दर्शयति। 'आसीन' इति स्वमत माह— "तिष्ठंस्त्वेवेति। तिष्ठन्नेव कुर्वीत न पुनरासीन इत्येवकारेण पूर्व मुपन्यस्तस्य मतस्य निरासः। स्वमते उपपत्ति माह— "इमे वा इति। एवं सञ्चितोऽग्नि रिति पृथिव्यादयो लोकाः कुतः प्रजापति स्तावत् पृथिव्यादि-लोकदेहत्वेन तदात्मक एषोऽग्निः प्राजापत्यात्मकः। स यः स प्रजापतिर्व्यस्रंसत मेव स योऽय मग्निश्चीयत इत्युक्तत्वात्। इत्थं प्राजापत्यात्मना अग्नि रिमे लोकाः, लोकाश्चैते तिष्ठ-

* का० श्रौ० सू० १८. २. ७।

† वा० सं० १७. १ ख।

‡ 'शुचं'—इति का० श्रौ० सू० १८. २. ८।

मीध ऊर्ध्वा अवतिष्ठन्त इव। अतश्च पृथिव्यादिलोकत्रयात्मकस्याग्नेरवयवीभूतानां मिष्टकानां धेनुकरणं स्थित्वा सम्पाद्य मित्यर्थः। अपि च लोके तिष्ठन् पुरुषो वीर्यवत्तरो भवति। तस्मादासीनः सतश्च वीर्यवानेव भूत्वा धेनु करोति। यथा धेनवोऽभिमतं पयो * दुहन्ति तद्वदेवैता अपिष्टकाः स्वाभिलाषितं दुहन्ति मुख्या धेनुरूपेणानुसन्धानं क्रियते धेनवश्च वीर्यवत्तरेण जनेन दुह्यमाना भूयः पयो दुहन्ति न पुनर्दुर्बलेन। अतोऽत्रापि स्वाभिलषितदोहनार्थं धेनुकरणं वीर्यवता सम्पाद्यमतश्च वीर्यवत्त्वं † तिष्ठतः सम्भवतीति तिष्ठन्नेव धेनुः कुर्यादिति भावः तिष्ठन्नपि कथं तिष्ठन् कुर्यादिति ॥ १४ ॥

तत्राह,— "उदङ् प्राङिति" ऐशानीदिगुच्यते। तदभिमुखस्तिष्ठन्नित्यर्थः ‡। लोके हि यजमानस्य पूर्वभागे धेनोः प्रत्यङ्मुखतयावस्थानो दोग्धृणाञ्च प्रत्यङ्मुखा यास्तेन दक्षिणभाग उपसदनात् स्वाभिलषितदोहनार्थं इष्टकानां धेनुकरणे तथावस्थान मुचित मित्याह— "पुरस्ताद्वा इति ॥ १५ ॥

प्रकृते धेनुकरणे स्थानविशेषस्पर्शपूर्वकं मन्त्रं विधत्ते— "स यत्रेति। अग्नेरात्मभागस्योपरि यत्र स्पष्टु माप्नोति 'तत्' स्थान मभिमृश्य इमा मे अग्न इति मन्त्रं जपेदित्यर्थः। अतएव

* 'या'—इति भ।
† 'वीर्यवत्त्वे'—इति ज।
‡ का० श्रौ० सू० १८ २ १०

कात्यायनः— "आत्मन उपरि प्रापयान्ते जयतीमाम इति *। अवाक्तन इति अस्यात्मभागस्येत्यर्थः। अग्न्यादिव्यतिरिक्तासु बह्वीषु देवतासु सतीष्वपि मन्त्रे अग्नि मेव प्राधान्येन किमिति सम्बोधयतीत्यत आह,— "अग्निर्देवतासा" मिति। अवयवव्यापारे अवयविन सामर्थ्यमत आदिष्टकाना मन्त्र्यवयवत्वेनाग्निस्तासां करणे असमर्थ इति भावः मन्त्रे आदावेकाच दशचेति। अवसाने अन्तश्चपरार्द्धश्चेति सङ्ख्याविशेष प्रयोगस्याभिप्राय माह— "एका च दशचेति। य एव परार्द्धो भूमा अपकृष्टं बहुत्वं अवरसङ्ख्यापर मसीमावताद्यपेक्षया दशत्वसङ्ख्या अवरा सतोऽप्यवरा एकच सङ्ख्या ततश्चार्वाचीनायाः सङ्ख्याया अभावादिति। अतोऽन्तश्च परार्द्धश्चेति यत् एव परार्द्धो भूमा उत्कृष्टं बहुत्वं अधिकसङ्ख्याकाष्टादशशतसहस्रादिसङ्ख्यापेक्षया अन्तस्याधिकात्वं ततोऽपि परार्द्धस्याधिकत्वं तत उत्तरस्या अधिकसङ्ख्याया अभावादित्यर्थः। एवं च देवान् पूर्न सङ्ख्या भूम्ना अधिक सङ्ख्या भूम्ना च मध्यतः शतादि सङ्ख्याकाः। एताः इष्टकाः परितो गृह्णोत्वा धेनुरङ्कुर्वत। यत एव तस्मादिदानीं यजमानोऽपि एकायेत्यादिमं मन्त्रपाठेन तद्वदेव परिगृह्य चेतः कुरुत इति। तन्त्रैवं सति मन्त्रे यत् सङ्ख्याकानां मिश्रकाणां धेनूरूपता सम्पाद्यते तत् सङ्ख्याका इष्टकास्ता धेनवः क्रियन्ते। तथाप्युक्तसङ्ख्यातिक्रमेण तत्सङ्ख्यानुसारात् यद्वोः कर्तृत्वादिश्येतेत्यर्थः। कथं तर्हीष्टकास्तात्सङ्ख्याका धेनवः सम्पाद्यन्त॰

* का॰ श्रौ॰ सू॰ ८. २. ६।

इत्यत आह,— "अमुत्र वा इति। एष यजमानो ऽमुष्मिन् लोके उपलक्षण मेतत् इहलोकेऽपि* ब्रह्मणा बृहता वीर्यवता † तेन यजुर्मन्त्रेणैता इष्टका बह्वीः एकादिपरार्धान्तसङ्ख्याकाः कुरुते, मन्त्र सामर्थ्यादल्पस्य बहुवचनम् ‡ ॥ १६ ॥

तैत्तिरीयके श्रूयते §,—"धान्यमसि धिनुहि देवान्"—इत्याद्य। एतस्य यजुषो वीर्येण यावदेका कामयते यावदेका तावदाहुतिः प्रथते न हि तदस्ति यावदेव स्यात् यावज्जुहोतीति मन्त्रे एका च दशवेत्यादिनोत्तरोत्तराधिकसङ्ख्याख्यानस्य ,फल माह— "अथेति। अथ तदेवेष्टका धेनुकरणं वाग्धेनुकरणात्मना-प्रशंसति— "यद्वेवेति। मन्त्ररूपया वाचितत्वात्। अग्निर्वागात्मकः एकत्वादिका अपि सङ्ख्याः वाचा प्रकाश्यमानत्वात् वागात्मिकाः एव भवति। अन्यथयवो भूतानामिष्टकाना एकादश चेत्यादि सङ्ख्या प्रकाशनेन मन्त्रेण देवावाचा मेव धेनु मकुर्वन्। अत इदानीन्तनोऽपि यजमानस्तद्देव करोति। एकत्वादि सङ्ख्यानां वागात्मकत्वात् उत्तरोत्तराधिकसङ्ख्यासम्नामेन वाच मेव भूयसी मविच्छिन्नां सम्पादितत्वाद्भवतीत्याह—, "अथेति। ननु च "इमा मे ‖ अग्न

---

* 'इहलोकेऽपि'—इति क।
† 'वीर्यवतेत्यर्थः'—इति ज, भ, ञ।
‡ 'बहुवचनम्'—इति ज क, ञ।
§ तै० सं० १. १. ६।
‖ वा० सं० १७ २।

इष्टका धेनवः सन्त्वित्यनेनैव * धेनुरूपत्वं सम्पादनात्। पुनरपि तदेवेता मे अग्न इत्यादिना सम्पाद्यत इति। पौनरुक्त्यं शङ्का निवारयति। एतद्वा इति इमा मे अग्न इत्येतेनैवा इष्टका अस्मिंल्लोके धेनूः करोति। अथैता मे अग्न इत्यनेन अमुष्मिंल्लोके स्वर्गे धेनूः करोति अतश्च पृथगर्थत्वान्न पुनरुक्तिरितिभावः। इष्टकानां लोकद्वयेऽपि धेनुरूपता सम्पादनस्य फलमाह— "अथो हेति। तथासति एता इष्टकारूपा धेनवः अस्मिंश्चामुष्मिंश्चोभयोर्लोकयो रेनं यजमानं भुञ्जन्ति पालयन्तीत्यर्थः। भुञ्जन्तीति भुजो नवन इत्यात्मने पदं विधानो ऽवन निषेधात् परस्मैपदम्। हे अग्ने इमा इष्टका इहलोके एकत्वादि परार्धान्त सङ्ख्याविशिष्टा धेनवः केवलं हि नेहलोक एव किन्तु हे अग्ने अमुत्रेत्येतत् पदं मन्त्र एव विहयोति। अमुष्मिंल्लोक इति तत्रापि एता इष्टका मे धेनवः सन्त्विति मन्त्रस्यार्थः ॥ १७ ॥

अथ तत्रैव मन्त्रान्तरम् प्रदर्शयन् व्याचष्टे— "ऋतव स्थेति †। ऋतवो हीति एता इष्टका ऋतव खलु संवत्सरा त्मकस्याग्ने अवयवत्वादित्यर्थः। अहोरात्राणि वा इष्टका इत्यन्नाप्ययमेवाभिप्रायः। ऋतावृध इति छान्दसो दीर्घः; ऋतावृध इति पुनर्वचन मादरार्थः। स्पष्ट मन्यत् ॥ १८ ॥

---

* 'सन्ति ग्रामैव'—इति ग।

† वा० सं० १७ २।

"विराजो नामेत्यादिकण्डाय मर्थः — एतस्मिन् काले खलु 'देवाः' यथा 'यथा एता इष्टका आचरन्ति' येर्नो मभिरेता इष्टका आचरन्ति जना ते रेव ना मभिरेता इष्टका आचरन्ते जनाः ते रेव नामभिः स्वय मयाह्वयन्ताम्। ततयैता इष्टका एनान् देवान् 'अभ्युपावर्त्तम्' तत् समीप मगमत्। 'अत्र लोकम्पृणा एव' अविहितनाम्नाः धेनुरूपतया अस्यार्थ सूत्रं विसृजन्त्यः; पराङ्मुखा एव तस्थुः अन्यासा मिष्टकानां स्वयमातृण्णा रेतः सिग्विश्वज्योतिरपस्याप्राणभृदित्यादिकानि विद्यन्ते लोकम्पृणानान्तु तथा प्रातिस्विकनामधेयाभावादिष्टकावत् स्वनामानाह्वानेन विमुखा भूत्वा अवस्थिताः * इत्यर्थ.। यथाहैवास्ता इष्टका विराजनाम्नो रकुर्वत †। अतः स्वय मपि तत् समीप मगमत्। अतएव तस्मादुपधानावसरेऽपि लोकम्पृणा दशदशोपधाय मन्त्रेणाभिमन्त्रयते एवं च सति विराजो दशाचरत्वात् देवा विराजः कृतवान् भवतीति। तस्मात् मन्त्रे लोकम्पृणा उद्दिश्य विराजो नामेति प्रयुक्त मिति ॥ १८ ॥

विशद मन्यत् ऋतमस्येत्यादि मन्त्रस्य योजनं यथाश्रुत मेव इष्टकानां धेनुरूपता सम्पादनानन्तरम "मण्डूकेनाव-कया वेतसशाखाभिरग्निस्थमस्य विकर्षणं विधत्ते— "अथेति।

* 'वनस्थिरः'—इति ज, 'वनस्थित'—इति भ।

† 'रन्कुर्वत —इति छ।

एतद्य इत्यादिकस्य सम्बन्धस्तु प्रागेवाभिहितः। विहितं तद्वि-कर्षणं 'सर्वतः' कर्त्तव्य मित्याह ॥ २० ॥

सर्वत इति सर्वथापि विकर्षणस्य शमनार्थतां दर्शयति— "यद्वैवेन मिति। 'एनं' मग्निं मण्डूकादिभि 'र्विकर्षति' इति 'यत्'- यत्र एतत् कारणं खल्विति कारणाभिधानं प्रतिज्ञाय 'यत्रैत' मित्यादिना तत् प्रदर्श्यते,— 'अग्रे' पूर्वं यत्र यस्मिन् प्रस्तावे ऋषिशब्दाभिधेयाः 'प्राणा' एत मग्निं समस्कुर्वन् संस्कार-प्रकारस्तु षष्ठकाण्डसादावुक्तः ; तदाति * प्राणास्त मग्नि 'मद्भि' रेवोचितवतः ता याप: सस्कता मण्डूका' अभवत् ॥ २१ ॥

ततः प्रजापतिः प्रतिनोऽस्माकं रसो वाद्यादित्यद्भिरुक्तो स प्रजापतिर्वै एतस्य 'रसस्य एष' यमस्यति वेत्तु इति अब्रवीत्। तस्येति कर्मार्थे षष्ठी एव इति प्रत्यक्षेण निर्दिष्टम्। 'तं' वनस्पति वेतस इति परोक्षेणाप्याह। यत एव सुप्तं सेन वैतसोऽभूत् खलु 'तं' देवाः परोऽक्षकामत्वा द्वेतस इत्याचक्षते। अथापो यदब्रुवन् अवाङ्कटगादिति तस्मात् स रस 'अवाका अभवन्'। ताश्च देवताः परोक्षकामत्वा दवका इत्याचक्षते। "ता हैता इति। उक्त प्रकारेण 'मण्डूका:' साक्षादेवापः वैतसोऽपि तद्रसवैदानान् अवकास्तुत इमाआत्मकत्वादिति सर्वेष्वेते मण्डूकादयः अवकात्मका इति। ता एता स्त्रिविधा आपः खलु तस्मात्ते रवकर्षणैरेता स्त्रिविधा-भिरप्यद्भिरेन मग्निं शमयितवान् भवति ॥ २२ ॥

---

* 'तदेते—इति ष।

इत्यं मण्डूकादीनां सर्वात्मकत्वेन गमयमार्थत्वं प्रद-र्शयितुमेव कृत्स्नात्मरूपेण प्रशंसति,— "यद्वेति। पूर्वं प्रजासृष्टिनिबन्धनेन विस्रंसनेन पराङः प्रजापति इदानीं स्वयमरूपेण संस्कारेण प्राणादीनां निधानात् पुनः कृतघ्नत इति चायमानाग्निलक्षणः प्रजापति र्जायत एव। जाय-मानस्य च सर्वान्नभोज्यार्थं सैवोत्पत्तेः; एषोऽपि सर्वस्मा अन्नाय जायते। मण्डूकादयश्च कृत्स्नं मन्नम्। तदेव प्रदर्श्यते,— "पशवश्चैता इति। 'एता मण्डूकावकावेतस शाखा:' * क्रमेण पशव श्चादौ वनस्पतयश्च भवन्तीति। मण्डूकादय स्थावरजङ्गमात्मकं कृत्स्नं मन्नं भवन्ति प्रदर्श्यते। मण्डूकादयः सर्वे अपि च अन्नात्मकाः। तथापि अवकामाश्चैका यत्र नत्वाद-प्राप्ति वनस्पतिरूपत्वाच्च ता आप इत्युक्तम्। एवञ्च सति मण्डू-कादिभिर्विकर्षणेन एन मग्निं सर्वात्मनेन प्रीणातीति ॥ २१ ॥

विकर्षणेन वीतरसान् मण्डूकादयोऽनुपजीवनीयः अस्त्रि-त्याह,— "मण्डूकेनेति पशूनाम्। पशूनां मध्ये मण्डूकेन विकृष्ट-वानिति यत् यस्मात् पशूनां मध्ये मण्डूका गतदारत्वात् पश्वन्तरवदुपकारको न भवतीति। सो ऽध्वर्यु कथति एव मैवावका अपि मत्ताः पेयावान् भवतीति वेतसोऽपि वनस्पत्यन्तर-वत् पुष्पफलादि नोपकारको न भवतीति। एते सर्वे अनुजीव-नीयाः अभूवन्नित्यर्थः ॥ २४ ॥

---

* का० श्रौ० सू० १८ २ १० । वा० सं० १७ ६ ।

मण्डूकादिभिः कथं सम्भवतीति तदुपाय माह— "स तानीति सोऽध्वर्युः 'तानि' मण्डूकादीनि 'वंशे प्रबध्य' विकर्षणेनेति शेष । पूर्वं मग्निस्थलस्य सामान्येन विकर्षण मुक्तम् । अनेन विकर्षति । सर्वतो विकर्षतीति । तत्रेदानीं कस्मिन् कस्मिन् प्रदेशे केन केन प्रकारेणेति विशेष जिज्ञासाया माह ;— "दक्षिणार्द्धेनेति । परिश्रिता मन्तरेणाग्नि-रात्मना भागस्य दक्षिणभागे प्रथमं 'प्राग्' अपवर्गं कर्षति । "समुद्रस्यत्वेवेति * मन्त्रेणेत्यर्थः । दक्षिणार्द्धेनेति व्यत्ययेन तृतीया । समुद्रस्य त्वावकयाग्ने परिव्ययामसीत्यस्य तात्पर्य माह — "समुद्रियाभिस्त्वेति । समुद्रशब्देनात्र जलाशय उच्यते । समुद्र सम्बन्धिनीभिरद्भि 'स्त्वा शमयाम' इत्येतदुक्तं भवति । अवकाया अबात्मकत्वात् तया सञ्चरणेन शमनञ्च निष्पादनादित्यर्थः । "समुद्रियाभिरिति समुद्रा अभ्राद् † इति प्रत्ययः । तस्य आयनेयी इत्यादि सूत्रेणापि यादेशः । हे 'अग्ने' 'त्वा' समुद्रसम्बन्धिन्या 'अवकया' यदि 'परिव्ययामसि' परितः शब्द गुणः इदन्तो मसि रित्युत्तमपुरुष बहुवचन मकारस्यान्ते इकारागमः । तेन सञ्चरणेन शान्त स्त्वं 'अस्मभ्यं' अस्मादर्थं पावयति शोधयतीति 'पावक' पावयिता 'शिव' शान्तः शानुकूल्यवान् भवेति मन्त्रस्यार्थः ॥ २५ ॥

* वा० सं० १७ ४ ।

† पा० सू० ४ ४ ११८ ।

अत्र प्रकारेण दक्षिणभागे विक्रम्य पश्चिमभागे उदगपवर्गं "हिमस्यत्वेत्यनेन मन्त्रेण * विकर्षेदित्याह,— "अथ जघनार्द्धेनेति। 'यद्वै शीतस्य' इत्यादिकस्याय मर्थः— 'यत्' खलु 'शीतस्यापि प्रशीतं' प्रकृष्टं शीतं 'तद्धिमस्य जरायु' जरायुशब्दो गर्भवेष्टनवचनः; अतश्च जरायुर्यथा गर्भं माच्छादयति तद्वदधिकं शीतमभिभवेमाच्छादयतीति। हिमस्य जरायुणेति शीतादप्यधिकशीतत्व मुच्यते, इति। अत्र अन्नात्मका मण्डूकादय एव हिमस्य जरायुणेत्यनेन विवक्ष्यते। तेन च शब्देन तेषा मभिधानं प्रकृष्टशमनसमर्थत्वात् सूचनार्थ मिति प्रतिपत्तव्यम्॥ २६॥

अथोत्तरभागे प्रागपवर्गं "उदन्यमुपेति † मन्त्रेण विकर्षेदिति विधत्ते— "अथोत्तरार्द्धेनेति मन्त्रस्तु स्पष्टार्थ इत्याह यथैवेति॥ २७॥

अथ पूर्वभागे "अपा मिद मित्यादि ‡ मन्त्रेण दक्षिणापवर्गं विकर्षेत्याह अथ पूर्वार्द्धेनेति। अत्र मपि मन्त्रस्पष्टार्थ इत्याह— "यथैवेति है अमे यदेतत् मण्डूकावकावेतसः शाखालक्षणं अस्तु इदं अपान्ययनं नितरां स्थानं अपा मल्पीयस्त्वेति तदयं नत्वं सम्भवतीति। तत्राह समुद्रस्येति नह्यल्पीयसी मपामयनमेतत्। अपि तु 'समुद्रस्य' जलनिधिरेव 'निवेशनं' निवे-

* वा० सं० १७ ५।
† वा० सं० १७ ६।
‡ वा० सं० १७ ७।

यतेऽस्मिन्निति निवेशनं अधिकरणे ल्युट् स्थाने मित्यर्थः। एवञ्च तथाविधेन मण्डूकादिना विक्रष्यसे यतः अतस्त्वां प्रयोमि ते हेतयो ज्वालाः अस्मादन्यां 'तपन्तु अस्मभ्यं' तु त्वं पावकं 'शिवश्च' भवति सन्नार्थः। तत्राग्नौ विकर्षणप्रकारं हस्ताभिनयेन दर्शयन दक्षिणभागादिक्रमेण विकर्षणात् सिद्धं प्रादक्षिण्यक्रमं प्रशंसति। इत्यपि विकर्षतीति,— "देवत्रेति। देव मनुष्येभ्यो * सूत्रेण देवार्थे त्रा प्रत्ययः। देवं देवं देवोचितं भवतीत्यर्थः॥ २८॥

आत्मभागविकर्षणस्य प्राथमिकत्व मुपपादयति,— "आ-त्मान मिति दक्षिणार्द्धे नेत्यादिना विहितं विकर्षण मग्ने-रात्मभागे एव क्रियते। अतश्चाग्ने आत्मानं विकर्षतीत्येतदुप-पन्नं कुतः सम्भवति। जायमानस्य करचरणाद्यवयवजातस्य मध्ये पूर्वमात्मभाग एव सम्भवति तत् सकाशात् करचरणादीना मुत्पत्तेरिति। अथ दक्षिणपश्चादीनां विकर्षणं विधाय तत्क्रमसिद्धं प्रादक्षिण्यं पूर्ववत् प्रशंसति॥ २८॥

अथेति पश्चादीनां विकर्षेण मात्मभाग मभिलक्ष्य कुर्या-दित्याह। अध्यात्ममिति अन्यात्मना मभि अध्यात्मं लक्षणे-नाभिप्रती आभि मुख्ये इत्यव्ययवी भावसमासः। अनयेति समासान्तष्टच् † विकर्षणानुसारेण 'प्राग्निं' निहितवान् भवतो॰

* 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्— पा॰ सू॰ ५ ४ ५६।

† पा॰ सू॰ ५. ४ १०८।

त्याह। अध्यान मेवेति कथ मध्यानं विकर्षं भवतीति; तत्राह परस्तादिति। अथ दक्षिणपश्चादीनां विकर्षेषु मन्त्रान् विधत्ते,— अग्ने पावक रोचिषेत्यादिना मन्त्रेषु * पावक-शब्दप्रयोगस्याभिप्राय माह— 'पावकं' पावक मिति 'यत्' खलु वस्तु 'शिवं' तस्यैवार्थे प्रदर्शनं 'शान्त' मिव तत् 'पावकं' भवति। अथाग्नस्य शुचि सम्पादकत्वात् अतद्धर्मैः शान्तत्व सिद्धये तेन शब्देन सम्बोधन मिति ॥ १० ॥

अथ: विकर्षे विनियुक्तानां मन्त्राणां सप्तत्वसङ्ख्या प्रशंसति,— "सप्तभि रिति। 'सप्तचितिकोऽग्नि' रित्यनेन 'सप्तर्तवः संवत्सर: सम्वत्सरोऽग्नि' रित्यनेन च पूर्णवाक्ये: सप्तसङ्ख्यायाः प्रदर्श्यते। पञ्च चितयो नित्याः इतरे द्वे चिती नैमित्तिके इति सप्तचितय: अधिमासापेक्षया सप्तर्तव:। यस्मिन् वंशे मधुकादीनि यथा विलष्टानि वंश सुखानि 'मद्विशेदित्याह तं वंश मिति ॥ ११ ॥

अथैनं अग्निं परितः सामभि र्गायेदित्याह—"अथेति। विविधं सामगानं अमृतरूपतया प्रशंसति। अन्नेव इति। कथ मेतत् साम्ना अमृतरूपत्व मिति, तत्राह— "सामानीति। अङ्गानामे शरीरस्य स्वाभाविकारादि पञ्चभेदविशिष्टत्वात् वा साम्ना प्राणत्वं प्राणश्चामृतं खलु प्राणसम्बन्धे मरणाभावात्। अतश्च प्राण रूपेण साम्नामप्यमृतरूपत्वात् सामगानेना मृत मुत्तमं रूपं अग्निरयं निर्दधातीत्यर्थेनत्र सामगानं सर्वतः कर्त्तव्य

---

* गा० सं० १७ ८।

त्रिवृतं छन्द मिति। तत्र हिङ्कारे खलु छन्दं साम भवति। सामान्यरूपेण हिङ्कारे छन्द मपि सामवर्त्तत इति मनेनैवाभिप्रायेण स्तुत्यन्तरेष्युक्तं हिंकरोति। सामे वा करोति। अथेनं सामभिः परिगायतीति सामान्येन विधानात् देवविशेषे सामविशेषगान मभिधत्ते॥ १४॥

"गायत्र मित्यादिना। 'तत् सवितुर्वरेण्यं' * मित्येतस्या गायत्र्या मृत्युत्पन्नं साम गायत्रम्। तत् पूर्वभागे गायेत्। एवञ्च गायत्र्या अग्निना सहोत्पत्ते तदोत्पन्नस्यापि साम्नो-ऽग्नित्वादस्य सञ्चिताखिललक्षणस्य प्रजापते रग्नि मेव शिरः प्रदेशत्वात् किञ्चास्य शिर एवैतेन सामगानेन 'अनस्थिक ममृतं' करोति॥ १५॥

'अभित्वा शूरनोनुम' † इत्येतस्या मृत्युत्पन्नं साम रथन्तरं तद्दक्षिणपक्षे गायेत्। एवञ्चास्य पृथिवी मेव दक्षिणं पक्षं कृतवान् भवतीति आह— "रथन्तर मित्यादिना अस्याः

---

* गायत्रसाम ;—

तत्सवितुर्वरेण्यम् भर्गोदेवस्य धीमहि।

धियो यो नः प्रचोदयात्॥

—इति उ० ६ प्र० ३ अ० १० सू० १ ऋचि।

† रथन्तरम् ;—

अभि त्वा शूर नोनुमो ऽदुग्धा इव धेनवः।

ईशान मस्य जगतः स्वर्दृश मीशान मिन्द्र तस्थुषः।

—इति छ० ३ प्र० १ अ० ४ द० १ ऋचि आ० ४प्र० १अ० ३१ साम।

धीति। "इमे इति। इन्द्राभिप्रायेण दर्शयति। यत इमे सर्वे रसा अस्या मध्यतिष्ठन्त। अतोऽतिशयरसाधारत्वेन इयं रसवतः रसतम एव रसंतम. * तत्र परोक्षकामत्वाद्देवा इत्यन्तर मभिदध इत्यर्थः ॥ २६ ॥

'त्वामिद्धि हवाम' † इत्येतस्यामृच्युत्पन्नं साम बृहत् तदुत्तरे पदे गायेत्। तथाविदेव भैवाप्योचारं पदमन्तरम् भवतीत्याह — "बृहदुत्तरे पद इति। 'बर्हिष्ठा अतिशयेन बृहती बृहच्छब्दादतिशयार्थे इष्टनिटिलोपे च रूपम् ॥ २७ ॥

'कयानश्चित्र आभुवद्' ‡ इत्यस्यामृच्युत्पन्नं साम वामदेव्यम्। तदात्मभागे गायेदित्याह। "वामदेव्यमिति। आत्म-

---

* 'रसतमः रसतम एव रसंतमः'—इति क।

† बृहत्साम;—

त्वामिद्धि हवामहे सातौ वाजस्य कारवः।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः॥

—इति ऋ० ४प्र० २अ० ५द० २ऋचि, छा० १प्र० १अ० २७साम

‡ महावामदेव्यसाम,—

कया नश्चित्र आ भुवदूती सदावृधः सखा।
कया शचिष्ठया वृता॥ १॥
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः।
दृढा चिदारुजे वसु॥ २॥
अभी षु णः सखीनामविता जरितॄणाम्।
शतं भवास्यूतये॥ ३॥

—इति उ० १प्र० १अ० १२सू० १—३ऋचु, उ० १२० १प० ५साम।

भागे वामदेव्यस्य नाम्नैव वायु मेवात्मानं करोतीत्याह । "प्राणो वा इति । "सर्वेषां नु हैव देवानां मात्रा यज्ञायुरिति । तद्‌-भागे तेषां व्यवहारश्च वादित्यर्थः ॥ १८ ॥

अथ पुच्छं 'यज्ञायज्ञीयं' * साम गायेदित्याह ,— यज्ञायज्ञिय मिति । 'यज्ञा यज्ञा वो ऽग्नये' इत्येतस्या मृच्युत्पन्नं साम यज्ञायज्ञीयम् । यज्ञायज्ञ शब्दोऽस्मिन्नस्तीति विग्रह मतोऽत्र: सुप्तमन्त्रोरिति सामर्थ्यच्छ: । छस्य इयादेशः, अत्र यज्ञायज्ञीय मिति । प्रत्यक्षं छान्दसम् । यज्ञायज्ञीय ञ्च चन्द्रा-त्मतां प्रतिजानीते । 'चन्द्रमा वै यज्ञायज्ञीय' मिति । तदे-वोपपादयति "यो हि कयेति । 'यज्ञः सन्तिष्ठते' सम्पूर्णतां मेति । तस्याहुतीनाए रसा" एवं चन्द्रमस मेतीति । अतएव देवा एत मुपजीवन्ति । अतो यज्ञाहुति रसस्य चन्द्रं प्रति प्राप्तिद्वारा यज्ञायज्ञः छन्द एव यज्ञः एत मप्येति । तस्मात् 'यज्ञो यज्ञ' एत मेतीति , चन्द्रमा यज्ञायज्ञीय मित्यर्थः ॥ १९ ॥

अथ यज्ञायज्ञीयस्य चन्द्रात्मकत्वम् । ततः किं प्रजाते समा-यात मित ता आह— चन्द्रमस मेतीति "प्रजापतेर्हृदय मिति । 'कश्चित् साम मध्यम गायेदित्याह— "अयेति । तत् साम आदित्यात्मना स्तौति । "असौ वा इति । आदित्यस्य हृदय

---

* यज्ञायज्ञीय साम :—

यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे ।

प्र प्र वयममृतं जातवेदसं प्रियम्मित्रन्न शंसिषम् ॥

—इति ऋ० ६म० १अ० ४८सू० १ ऋचि, गे० १प्र० ७ख० ६५ साम ।

साद्दश्य प्रदर्शनेनोक्तं प्रजापतिहृदयसादृश्य प्रजापतेनोक्तं प्रजापतेर्हृदयत्वं उपपादयति । 'अस्य' लक्षण एत इति । गायत्र्यादीनां गानस्य स्थान विशेष उक्तः । अथैतद्गानं कस्मिन् स्थाने कर्त्तव्य मिति तत्राह,— 'आत्मन्' इति आत्मभागीति । यत्र क्वचित्क्रियतेति तत्राह — "निकक्ष इति । निकक्षावप्युभौ विद्येते इति तत्राप्यतरस्मिन् क्रियतेत्यत आह — "दक्षिणे निकक्ष इति । अतोऽस्याधिकया हृदयं 'नेदीय उत्पन्नं' सन्निहितं तदीय इत्यस्यान्तिकार्थत्वात्तयोर्गे 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' * मिति पक्षे प्रकरणात् पञ्चम्याविधानादत इति पञ्चमी इत्थं प्रजापते हृदयस्यादित्यात्मकत्वात्तस्य गानेनादित्य मेवात्मने रात्मभागं करोतीत्याह,— "आदित्य मेवेति ॥ ४ ॥

प्रजापते र्हृदय गायत्रादिसामवत् च कस्याञ्चिदृचि न गीयते । अपि तु केवलं प्रजाशब्दे प्रजापतिशब्दे च गीयते अतएव आपस्तम्बेन सूचित ,— "प्रजापतेः सामान्च गायतीति † अतस्तस्य साम त्वयोः शब्दयोर्गान प्रशंसति — "प्रजासु चेति । न च ता प्रजासु प्रजापता वित्यभिधेय निर्देश. क्रियते नहि तत्र गानं सम्भवति अशक्यत्वात् नचाय शब्दनिर्देश । प्रजास्विति बहुवचनवैयर्थ्यात् । अतः कथ मस्य वचनस्योपपत्तिरिति नैतदस्ति वाच्यवाचकयोर्भेद विवक्षया वाचकशब्दे क्रियमाणं गानं

* पा० सू० २ ३ ३४ ।
† आप० श्रौ० सू० १ १२. ७ ।

वाचो क्रियत इत्युपचर्यते। तथत् 'प्रजासु हृदयं दधाति' अथ 'यत् प्रजापतो गायति तदग्नौ हृदयं दधातीति'। अभिषेचफलसम्बन्धप्रदर्शनात्तदनुरोधेनाभिषेचे एव गायतीति। उपचारोक्तेरभिप्रायः पूर्वं प्रजा प्रजापतिशब्दयो र्गानेन प्रजासु अग्नौ च हृदयं निधीयत इत्युक्तम् ॥ ४१ ॥

अथाग्ने स्तदुभयात्मकत्वात् तत्रैव गाने तत्तोभयत्रापि हृदयं निधीयत इत्याह,— "यद्वेवेति। प्रजाशब्देन प्रजापतिशब्देन च तस्य गानमग्नौ क्रियते। अतएव पूर्वन्तच्छब्दयाभिधेयप्राधान्ये-नाग्ने रुपसर्जनत्वं मुक्तम्। अत्र तु अग्निप्राधान्येन तच्छब्दद्वया-भिधेयस्योपसर्जनत्व मुच्यत इति विभागः। "अयं वा अग्निः प्रजाश्च प्रजापतिश्चेति। स यः प्रजापतिर्व्यस्रंसततया मेव 'स योऽय मग्निश्चियत इति श्रुतेः अग्निस्तावत् प्रजाः प्रजापतेश्च सर्वप्रजा निर्मातृत्वेन तदात्मकत्वात्तद्दाराग्निरपि प्रजात्मक इत्यर्थः ॥ ४२ ॥

"अथैतानि गायत्राद्दीनि सामानीष्टकारूपेण स्तौति— "ता हैता इति। स मानि भवन्ति प्राणा वै सामान्यमृत मु वै प्राणा अमृत मेवास्मिन्ने तद्रूप मुत्तमं दधातीति साम्नान्ता-वद मृतत्वं मुक्त मेव इष्टकाना प्रतिदिश मुपधीयमानत्वा-दुपधानवादो तेषां प्रतिदिश गानादिष्टकात्वोपचारः। एवञ्च तान्येतानि सामान्यमृतेष्टका भवन्ति। "ता हैता इति स्तोमिष्ट्वविशेषेयेष्टका एव तायेष्टका उत्तमाः सर्वाभ्य इष्टकाभ्यः उपरितय उपरितय उपदधाति। तेनास्य दृश्यमानस्य

सर्वस्याप्यस्तत सुत्तमं दधाति। तस्मादस्य सर्वस्य प्रपञ्चस्या-स्त सुतमं भवति। विहितं सामगानं समाख्यानादुद्गातुः प्राप्नोतीति। तदपवाद माह— "नान्योऽध्वर्योरिति। इतरस्य मानृत्वे दोष माह— 'इष्टका वा एता इति। एतेषां साम्ना मिष्टकात्वादिष्टकानां चाध्वर्युणोपधेयत्वादितरस्य * गातृत्वे तदु-पधानवैधुर्येणाध्वर्युर्निर्जित पराभूतो भवेदित्यर्थः ॥ ४३ ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे प्रथमेऽध्याये द्वितीयं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम् ,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां कृष्णवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यौ ,
व्ययाणोद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥

* 'चाध्वर्युरिति इतरस्य'—इति। छ, ज ।

॥ अथ द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥

उपवसथीयेऽह्नप्रातरुदित ऽआदित्ये * । व्वाचं व्विसृजते व्वाचं व्विसृज्य पञ्चगृहीत माज्यं गृह्णीते नव पञ्च हिरण्यशकलान् प्राश्यत्यैगत् नयग् समासिक्तं भवति दधि मधु घृतं पात्र्यां वा स्थाल्यां व्वोत्तविल्यां तदुपरिष्टाद्दर्भमुष्टिं निदधाति† ॥ १ ॥

अथाग्निं मारोहति । नमस्ते हरसे शोचिषे नमस्ते ऽअस्त्वर्च्चिष ऽइत्यवैष सर्व्वोऽग्निः संस्कृतः स एषोऽत्र तस्मा ऽअलं यद्धिंस्यादं जिहिंसिषेद्य मु वा ऽएष हिनस्ति हरसा वैनं शोचिषा व्वार्च्चिषा वा हिनस्ति तथो हैन मेष एतैर्न्न हिनस्त्यन्यांस्ते ऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यं शिवो भवेति यथैव यजुस्तथा बन्धुः ॥ २ ॥

अरुण्याग्निं स्वयमातृण्णां व्याघारयति । आज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥ ३ ॥

* 'त्यादित्ये'—इति ग, घ।

† 'निदधाति'—इति ग, घ।

स्वयमातृण्णां व्याघारयति। प्राणः स्वयमातृण्णा प्राणे तदन्नं दधाति * ॥ ४ ॥

यद्वेव स्वयमातृण्णां व्याघारयति। उत्तरवेदिᳪ᳒ह्यग्नेरथ या ममूं पूर्व्वां व्याघारयत्यध्वरस्य साथ हैषाग्नेस्ता मेतद् व्याघारयति ॥ ५ ॥

पश्यस्तेव हिरण्यं व्याघारयति। प्रत्यक्षं वै तद्यत् पश्यति प्रत्यक्षᳪ᳒ सोत्तरवेदिः प्राणा एवेह भवन्ति परोऽक्षं वै तद्यत् प्राणाः परोऽक्ष मिव मुत्तरवेदिः ॥ ६ ॥

स्वाहाकारेण तां व्याघारयति। प्रत्यक्षं वै तद्यत् स्वाहाकारः प्रत्यक्षᳪ᳒ सोत्तरवेदिर्व्वषट्कारेणे-मां परोऽक्षं वै तद्यद्वषट्कारः परोऽक्ष मिव मुत्तर-वेदिराज्येनाज्येन ह्युत्तरवेदिं व्याघारयन्ति पञ्च-गृहीतेन पञ्चगृहीतेन ह्युत्तरवेदिं व्याघारयन्ति व्यति-हारं व्यतिहारᳪ᳒ ह्युत्तरवेदिं व्याघारयन्ति† ॥ ७ ॥

* 'दधाति'—इति ख।

† 'व्याघारयन्ति'—इति ख।

नृषदे व्वेडिति। प्राणो वै नृषन् मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणो ऽग्निस्त मेतत् प्रीणात्य-प्सुषदे व्वेडिति यो ऽप्स्वग्निस्त मेतत् प्रीणाति बर्हिषदे व्वेडिति य ओषधिष्वग्निस्त मेतत् प्री-णाति व्वनसदे व्वेडिति यो व्वनस्पतिष्वग्निस्त मेतत् प्रीणाति स्वर्व्विदे व्वेडित्यय मग्निः स्वर्व्वि-दिम मेवैतदग्निं प्रीणाति ॥ ८ ॥

यद्वेवाह। नृषदे वेडप्सुषदे वेडित्यथै वैता-न्यग्नेर्नामानि तान्येतत् प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽयो ऽएतानेवैतदग्नी-नस्मिन्नग्नौ नामग्राहं दधाति ॥ ९ ॥

पञ्चैता आहुतीर्जुहोति। पञ्चचितिकोऽग्निः पञ्चऽर्त्तवः सव्वत्सरः संव्वत्सरो ऽग्निर्यावानग्निर्याव-त्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति* ॥ १० ॥

अथैनं समुक्षति। दध्ना मधुना घृतेन

* 'प्रीणाति'—इति ख।

जायत एष एतद्धीयते स एष सर्व्वस्मा अन्नाय जायते सर्व्वम्वेतदन्नं यद्दधि मधु घृतꣳ सर्व्वेणै-वैनमेतदन्नेन प्रीणाति सर्व्वतः समुक्षति सर्व्वत एवैनमेतत् सर्व्वेणान्नेन प्रीणाति ॥ ११ ॥

यद्द्वेवैनꣳ समुक्षति*। अत्रैष सर्व्वो ऽग्निः संस्कृतस्तस्मिन् देवा एतद्रूपमुत्तमं मदधुस्तथैवा-स्मिन्नयमेतद्रूपमुत्तमं दधात्यन्नं वै रूपमेतदु परममन्नं यद्दधि मधु घृतं तदादेव परमꣳ रूपं तदस्मिन्नेतदुत्तमं दधाति सर्व्वतः समुक्षत्यपि वाह्वेन परिश्रितः सर्व्वत एवास्मिन्नेतद्रूपमुत्तमं दधाति दर्भैस्ते हि शुद्धा मेध्या अग्रैरग्रꣳ हि देवानाम् ॥ १२ ॥

यद्द्वेवैनꣳ समुक्षति। एतद्वै यत्रैतं प्राणा ऋषयोऽग्रे ऽग्निꣳ समस्कुर्व्वꣳस्तदस्मिन्नदोऽमुं पुर-स्ताद्भागमकुर्व्वताद्ः सजूरब्दीय मथास्मिन्नेतꣳ सञ्चित ऽउपरिष्टाद् भागमकुर्व्वत तद्यत् समुक्षति

* 'समुक्षति—इति ख। 'समुक्षति—इति ग।

य ऽएवास्मिंस्ते प्राणा ऋषयः सञ्चित ऽउपरिष्टाद् भाग मकुर्व्वत तानेवैतत् प्रीणाति दध्ना मधुना घृतेन तस्योक्तो बन्धुः ॥ १३ ॥

ये देवा देवानाम्। यज्ञिया यज्ञियाना मिति देवा ह्येते देवानां यज्ञिया उ यज्ञियानाꣳ सम्वत्सरीण मुप भाग मासत ऽइति संवत्सरीणꣳ ह्येत ऽएतं भाग मुपासते ऽहुतादो हविषो यज्ञे ऽअस्मिन्नित्यहुतादो हि प्राणाः स्वयं पिबन्तु मधुनो घृतस्येति स्वय मस्य पिबन्तु मधुनश्च घृतस्य चेत्येतत् * ॥ १४ ॥

ये देवा देवेषु† । अधि देवत्व मायन्निति देवा ह्येते देवेष्वधि देवत्व मायन्ये ब्रह्मणः पुर ऽएतारो ऽअस्येत्यय मग्निर्ब्रह्म तस्यैते पुर ऽएतारो येभ्यो न ऽऋते पवते धाम किञ्चनेति न हि प्राणेभ्य ऽऋते पवते धाम किञ्चन न ते दिवो न पृथिव्या-

* 'चेत्येतत्'—इति ग।

† 'देवेषु'- इति ख, 'देवेषु'—इति ग।

ऽअधि स्तुष्विति नैव से दिवि न पृथिव्यां यदेव प्राणभृत्तस्मिन्त्स ऽइत्येतत् * ॥ १५ ॥

द्वाभ्याꣳ समुचति । द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् समुचति † ॥ १६ ॥

अथ प्रत्यवरोहति । प्राणदा अपानदा ऽइति सर्व्वे हैते प्राणा योऽय मग्निश्चितः स यदेता मवात्मनः परिदा न वदेताव हैवास्यैष प्राणान् वृञ्जीताथ यदेता मवात्मनः परिदां वदते तथो हास्यैष प्राणान्न वृङ्क्ते प्राणदा अपानदा व्यानदा वर्चोदा वरिवोदा इत्येतद्वा मे ऽसीत्येवैतदाहान्यांस्ते ऽअस्मत्तपन्तु हेतय पावको ऽअस्मभ्यꣳ शिवो भवेति यथैव यजुस्तथा बन्धुः ‡ ॥ १७ ॥

प्रत्येत्य प्रवर्ग्योपसद्भ्यां प्रचरति । प्रवर्ग्योप-

---

* इत्येतत्—इति ग, घ ।

† समुचति—इति ख ।

‡ बन्धु—इति ङ ।

मझ्रां प्रचयथास्मै व्रतं वार्ह्व्रतं वा प्रयच्छन्त्यथ प्रवर्ग्योपसङ्घा मथ प्रव्रर्ग्य मुत्सादयत्याण्वा तं कामं यस्मै कामायैनं प्रवृणक्ति ॥ १८ ॥

तं वै परिष्यन्द ऽउत्सादयेत् । तप्तो वा ऽएष शुशुचानो भवति तं यद्स्या मुत्सादयेदिमा मस्य शुगृच्छेद्यद्प्सूत्सादयेदपोऽस्य शुगृच्छेदथ यत् परिष्यन्द ऽउत्सादयति तथो ह नैवापो हिनस्ति नेमां यद्हाप्सु न प्राग्नाति तेनापो न हिनस्त्यथ यत् समन्त मापः परियन्ति शान्तिर्व्वा ऽआपस्तेनो ऽइमां न हिनस्ति तस्मात् परिष्यन्द ऽउत्सादयेत् ॥ ॥ १९ ॥

अग्नौ त्वेवोत्सादयेत् । इमे वै लोका एषो ऽग्निराप: परिश्रितस्तं यदग्ना ऽउत्सादयति तदेवैनं परिष्यन्द ऽउत्सादयति * ॥ २० ॥

यद्वेवाग्ना ऽउत्सादयति । इमे वै लोका एषो ऽग्निरग्निर्व्वायुरादित्यस्तदेते प्रवर्ग्या: स यदन्यवा-

* 'ऽउत्सादयति'—इति ख ।

न्नेरुत्सादयेदेतांस्तद्देवान् वहिर्द्धेभ्यो लोकेभ्यो दध्यादथ यदग्ना ऽउत्सादयत्येतानेवैतद्देवानेषु लोकेषु दधाति * ॥ २१ ॥

यद्देवाग्ना ऽउत्सादयति। शिर ऽएतद्यज्ञस्य यत् प्रवर्ग्य ऽआत्माय मग्निश्चितः स यदन्यत्राग्नेरुत्सादयेद्वहिर्द्धास्माच्छिरो दध्यादथ यदग्ना ऽउत्सादयत्यात्मान मेवास्यैतत् संस्कृत्य शिरः प्रतिदधाति ॥ २२ ॥

स्वयमातृण्णया सम्प्रस्पृष्टं प्रथमं प्रवर्ग्य मुत्सादयति। प्राणः स्वयमातृण्णा शिरः प्रवर्ग्य आत्माय मग्निश्चितः शिरश्च तदा ऽऽत्मानं च प्राणेन सन्तनोति सन्दधात्युत्साद्य प्रवर्ग्यं यथा तस्योत्सादनम् ॥ ॥ २३ ॥ ३ ॥

॥ इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् [ २. १. ]

---

* 'दधाति'—इति स।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

औपवसथ्यदिवसात् प्राचीने दिवसे कर्त्तव्यं प्रयोग मभिधाय तथा तस्मिन् दिवसे कर्त्तव्य मभिधत्ते। "उपवसथोयेहन् इत्यादिना। 'प्रातरुदित आदित्ये वाचं विसृजति' च यजमानः वाचं विसृज्येत्। यत्र पूर्वकाल मात्रे क्त्वा प्रत्ययः न हि तत्र पूर्वोत्तरक्रियायाः समानकर्त्तृत्व मस्ति।" 'यजमानस्य वाग्विसर्जनादध्वर्योराज्यग्रहणादिति भावो' 'अग्न्यागारा स्थाली तु पिठरा कारा'* उखस्थिर्त्वा महासुखा व्यत्ययेन ङी-प्रत्ययः। "तदुपरिष्टादिति। यत्र प्राच्यां स्थाल्यां वा दध्यादित्रयं समासिक्तं तदुपरिष्टादित्यर्थः ॥ १ ॥

अथाग्नि मारोहतीति "दर्भमुष्टि निधानानन्तरम् तदाज्यं दध्यादित्रयं समासिक्तं तदुपरिष्टादादाय "नमस्त †" इति मन्त्रेणाग्नि मारोहेत्। अतएव कात्यायनः,— "उभय मादाय चित्यारोहणं नमस्त इति ‡" इति। आरोहणे नमस्त इत्यस्य मन्त्रस्य पूर्वार्द्धस्य पाठे प्रयोजन माह— "अत्रैव सर्वोऽग्नि रिति।

* 'पिठरोकाह (स्थि)त्वा (।)'—इति ख।
'पिठरांका उख्या'—इति क।
'पिठर ख्का उख्या'—इति ग।
† वा० सं० १७ ११।
‡ का० श्रौ० सू० १८. ३. ५।

मात्मना प्राणोह्येवैतत् स्वयमात्मन आत्मनि इति। अतवाग्नि-मध्यन्धिनि प्राणे तदाग्न्यस्त्रमणमन्नविहितवान् भवति। प्रका-रान्तरेणापि स्वयमातृणायां व्याघारण मुपपादयति ॥ ४ ॥

यद्वेवेति। एषा स्वयमातृणा अग्ने रुत्तरवेदिः (खलु। अथ या ममुग् वुडी परामर्श पूर्वा मुत्तरवेदिं व्याघारयति। सा पुनः सोमयागस्य अतोस्यां स्वयमातृणायां व्याघारणाय्युत्तरवेदिः ) * तर्हि तद्व्याघारणे पूर्वोत्तरवेदिवत् ॥ ५ ॥

हिरण्यदर्शनादि † पूर्वकत्वेन भवितव्य मित्यत आह— "पश्यं स्तवेति। प्रत्यहं सोत्तरवेदिसंयुक्तस्यादि निर्मितत्वा-भावेनोपचारिकोत्तरावदित्वादित्यर्थः ॥ ६ ॥

स्वाहाकारस्य सर्वत्र हविःप्रदानसाधनत्वेन प्रत्यक्ष वेट्-कारस्य ‡ तु तथाभावेन परोक्षत्वं आज्येन पञ्चगृहीतेन व्यतिहार मुत्तरं वेदेर्व्याघारणात् तथैवास्या अपि उत्तर-वेदित्वेन व्याघारण मुपपन्न मित्याह। "आज्येनेत्यादिना। व्यतिहार मित्यनेन पूर्वं दक्षिणांसे व्याघारणं तत उत्तरश्रोणी पश्चाद्दक्षिणश्रोणी तत उत्तरांसे तत मध्ये इत्यय क्रमो विवक्षितः ॥ ७ ॥

अथ क्रमेण मन्त्रान् प्रदर्श्य व्याचष्टे। "नृषदे वेडिति नृषु सीदतीति। नृषत् इति प्राणव्यतिरिक्त मपि वस्तु

---

* 'भवनीविश्चान्तः प्रदर्शितः पाठो ग-पुस्तकमात्रे नास्ति।

† का० श्रौ० सू० १८. ३. ७।

‡ वा० सं० १७. १२।

प्रश्नस इति । विवक्षितोर्थो दर्शितः— "प्राणो वै नृषदिति । नृषदित्यत्र नृ-शब्दस्य प्रसिद्ध एवार्थो विवक्षितो नेतर इत्युक्तं मनुष्या नर इति एतत् मन्त्रसाध्यव्यापारस्य फल मुक्तम् । "तस्यो5य मिति । वेडिति सम्प्रदानार्थीयो निपातः । नृषदे मनुष्येषु वर्त्तमानाय प्राणरूपायाग्नये वेट् इद माज्य-रूपं हविर्दत्त मित्यर्थः । "अय मग्निः स्वर्विदिति । "अय' सवितोग्निः 'स्वर्वित्'- स्वर्गं लम्भयतीति स्वर्वित् सर्वार्थं मन्यत् ॥ ८ ॥

प्रकारान्तरेण मन्त्राणा मभिधानं प्रशंसति— "यद्वेवाह अप्सुषदे वेडिति ॥ इत्यत्रेति-शब्दः प्रकारवाचीनेन बर्हिषदे वेडित्यादीन्यपि संगृहीतानि भवन्ति । एतानि नृषदित्या-दीनि अस्यैव सवितोग्नेर्नामानि अस्य सर्वात्मकत्वेन मनुष्यादि-स्थितान्यात्मकत्वात् । अत एतेन नाम्नैवनामानि प्रीणितं यान् भवति । न केवल तेषां प्रीणनं अपि तदेव ताह-सम्प्रसिद्धपोवाह,— "तानीति । 'यस्यै खलु देवतायै हविर्गृह्यते सा देवता न' भवति । अतोऽत्र नृषदादि नामानि चतुर्थ्यं तात्कुवार्थहोमविधानादर्थं हविर्ग्रहण मिति हविषा तानि आत्मनि देवता कृतवान् भवति । किञ्च नृषदादि शब्दाभि-धेयान्-अग्निनामधारम स्मिन् सवितेऽसौ निदधाति ॥ ८ ॥

कार्त्स्न्येन प्रीति भवतीत्याह,—

आहुतीनां

"पश्चेता इति। यद्गृहीत माज्यं दध्यादिकञ्चेत्युभय मेव्यग्नेरुपयानीतं तत्राज्यस्य विनियोगोऽभिहितः ॥ १० ॥

अथावशिष्टस्य विनियोग माह— "अथैन मिति। तदुपयोग माह, "जायत एव इति ॥ ११ ॥

दध्यादीनां बहुत्वात् सर्वासत्त्वं विहितं तत् समुच्चयं परिश्रितो बहिरपि कर्तव्य मित्याह,— "सर्वत इति *। उपरिष्टाद्दर्भमुष्टिं निदधातीत्युक्तान् दर्भान् समुच्चये विनियुज्य प्रशंसति— "दर्भै रिति। 'अन्नं हि देवाना मिति' हि'शब्दः शास्त्रान्तरप्रसिद्धिं द्योतयति। अतएव तैत्तिरीयके श्रूयते,— "यत् पशवे दिनं तद्देवाना मिति" †। अथ तैर्दध्यादिभिः समुच्चये आघ्नन् संस्कृतोऽग्नौ उत्तमरूपनिधानं भवतीति प्रशंसति। 'यद्देवेति' 'अन्नं वै रूप' मित्यादिना परमरूपत्व मुपपाद्यते। अन्नस्यावद्रूपकारणत्वात् रूपं परमत्वं तु दध्यादीनां रसातिशयवत्त्वादिति दध्यादीनि परमं रूप मित्यर्थः ॥ १२ ॥

अथ पुनस्तान्येव दध्यादीन्यग्नेरुपरिष्टाद्भागरूपेण प्रशंसति— "यद्देवैन मिति। अग्ने पूर्वं 'यत' यस्मिन्नवसरे ऋत्विग्शब्दाभिधेयाः 'प्राणा' विस्रस्तं प्रजापतिं 'समस्कुर्वन्' तददः काले 'अदः' शब्दस्तस्य कालस्य विप्रकर्ष मभिधत्ते। 'अमुं भाग' मकुर्वत 'अमु' मित्यपि विप्रकृष्टो भाग उच्यते।

* "सर्वतः समुच्चयमपि बाह्येन परिश्रित इति"—इति का० श्रौ० सू० १८. ३. ८।

† तै० ब्रा० १. ६. ८ ६।

'अमुं भाग' मिति यदुक्तं-तदेवाह अतः (।) 'सजूरब्दीय' मिति सजूरब्दो ऽयवोभिरित्येतेन मन्त्रेण प्रतिपादितं होमरूप मन्न' यथास्मिन् सञ्चितेऽग्नौ एवं तं दध्यादिलक्षण -मुपरिष्टाद्भाग मकुर्वंतानेव प्रीणाति। सञ्चितस्याग्नेः प्राणविशिष्टत्वेन प्राण-कृतोऽग्नेर्भागः प्राणाना मपि भवतीति तस्याग्नेरनेनोपरिष्टाद् भागेन 'तानेव' प्राणान् प्रीणितवान् भवतीत्यर्थः। दध्यादि-विषयं ब्राह्मणम् प्रागुक्त मित्याह,— दध्नेति। तत्र सप्तम-काण्डे कूर्मोपधानकथनावसरेऽभिहितम् * ॥ १३ ॥

अथ समुच्चये प्रथम मन्त्र दर्शयन् व्याचष्टे— "ये देवा देवाना मिति †' देवा 'यज्ञियानां' यज्ञार्हाणा मपि यज्ञिय' तत् पूर्व कथ मेव सर्वेषां यज्ञार्हत्वादित्यर्थः द्वितीय तृतीय मादौ प्रक्षिपार्थ मित्याह 'संवत्सरीणा' मिति। एतस्य समुच्चयस्य संवत्सराद् क्रियमाणत्वादेतत् 'संवत्सरीणो भाग' यतः प्राणादध्यादीनाहुता-न्येषादग्नि यतोऽहुतादो 'हविष' इत्युक्तम्। चतुर्थपादे मधुनो घृतस्येत्यनेन प्रकृत मेव मध्वादि उच्यत इत्याह— ("संवत्स-रीणा मिति। एतस्य समुच्चयस्य संवत्सराद् क्रियमाणत्वा-देतत् 'संवत्सरीणो भाग' यतः) ‡ स्वग्रमस्येति ॥ १४ ॥

अथ द्वितीय मन्त्रं व्याचष्टे—"ये देवा देवेष्विति §। 'देवाङ्गेते'

---

* पुरस्तात ७ का० ४ प्र० १ ब्रा० १ कण्डी ।

† वा० सं० १७ १३ ।

‡ बन्धनीचिह्नान्तः प्रदर्शितः पाठो ख-पुस्तकमात्रे अधिकः ।

§ वा० सं० १७ १४ ।

इति। एते देवाः प्राणादिषु 'अधि देवत्वं' अधिका देवास्तेषां भाव स्तत्व 'मायन्' प्राप्नुवन् तान्प्रति स्तेषा सुपजीव्यत्वात्। अत उक्तं 'ये देवा देवेष्विति' द्वितीयपादे सर्वात्मकत्वम्। ननु इद्रत्वाद्ब्रह्मशब्देनाग्नि रुच्यत इत्याह ,— "अयमग्निरिति। तृतीयपादः प्रसिद्धार्थ इत्याह—"न ह्वि प्राणेभ्य इति। तुरीयपादे ऽभिप्रेतं विशेषमाहानेनेति इति। 'ते' प्राणादित्यपि 'न' सन्ति पृथिव्या मपि न सन्ति 'किं' तु यदेव प्राणभृदस्तु तस्मिन् सन्तीत्ये-तदुक्तं भवति। देवाना मपि देवा यज्ञियाना मपि यज्ञिया के प्राणाः संवत्सर सम्बन्धिनं भाग मुपासते। अस्मिन् पक्षे हविषा हुताग्न्यात्पर स्ते स्वयमस्य मधुनो घृतस्य पिबन्तु मधुनो घृतस्येति व्यत्ययेन कर्मणो षष्ठी, मधु घृतं उपलक्षण मेतत् । दध्यपि पिबन्त्विति प्रथमस्यार्थः। ये देवाः देवेष्वपि अधिक-देवत्वं प्राप्नुवन् किञ्च ये अस्या अग्नेः पुरो गन्तारो भवन्ति येभ्यो विना किञ्चिदपि शरीरं न प्रवर्त्तते प्राणा दिवः सानुषु पृथिव्या अपि सानुषु न सन्ति। किन्तु यदेव प्राण-भृत् तत्रैव सन्तीति द्वितीयस्यार्थः। 'सानु' शब्दस्य (यदा-दिषु मास्तन् स्नूना सुपसङ्ख्या मितिस्नु आदेशम्। समुच्चय-मन्त्रयो र्द्विस्वसङ्ख्यां अग्नेः समुच्चयसाकल्ये हेतुत्वेन प्रशंसति ॥१५॥

"द्वाभ्या मिति। यजमानस्याग्निचयनेनाग्नित्वप्राप्ते यजमानो-ऽग्निः समुच्चयानन्तरम् प्रत्यवरोहेदित्याह यथेति) * ॥ १६ ॥

---

* वन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तकादर्शम्.।

अवरोहणम् उखोपस्थानप्रभृतिरिक्तयो गुणादोषावाद 'सर्वं देव' इत्यादिना 'योऽयं अग्नि' चयनेन संस्कृतः एष सर्वे प्राणाः प्राजापत्यात्मकत्वात् सर्वेषां प्राणा इत्यर्थः । अतः सोऽध्वर्यु-रवावसरे यदि 'आत्मन' एनां "प्राणदा * इत्येतान् मन्त्रयां प्राणरक्षणं न वदेत तर्हि एषोऽग्निरस्याध्वर्योः 'प्राणान् वृञ्जीत' वर्जयेदपगमयेदित्यर्थः । प्राणादेत्यादिमन्त्ररूप प्रदिदाभिधाने तु तथा न कुर्यात् ।

इत्थं मन्त्ररूपस्योपयोग मभिधायाथ मन्त्रं व्याचष्टे— "प्राणदा इति †" । "प्राणदा मेऽसीत्येतदिति । 'मे' मदर्थं एषां प्राणादीनां दासीत्येतदेवोक्तं भवति न पुनरन्यार्थ मित्यर्थः । हे अग्ने त्वम् मे प्राणापानव्यानानां वर्चसो धनस्य च दातासि । अतो ब्रवीमि ते हेतयो ऽस्मादन्यां 'तपन्तु' 'अस्मभ्यं' तु 'पावकः शिवश्च भव' ॥ १७ ॥

अग्नेरवरोहणात् पश्चात् कर्तव्यं प्रयोग माह— "मत्येत्येति । अयाचा इति 'अस्मै' यजमानाय 'व्रतं' पयः कुर्वन् 'या अर्द्ध-व्रतं प्रयच्छति' 'अथ' तदा मैत्रावरुणिकाभ्यां 'प्रवर्ग्योपसद्भ्यां प्रचर्य' अथ प्रवर्ग्यं मुत्सादयति 'यस्मै कामायैनं प्रवृणक्ति' तस्य कामस्याप्त्यै स्यात् इत्यर्थः ॥ १८ ॥

'प्रवर्ग्यं मुत्सादयति' सामान्येन विधानादत्र क्वचित् प्रसक्ता-माह,— "त वा इति । परितः अन्दो जलस्तम्बं यत्र

---

* "प्राणदा इत्यवरोहति"—इति का॰ श्री॰ सू॰ १८ ३. ८ ।

† वा॰ सं॰ १७. १५ ।

परिप्लवो द्वीपः* । ननु पृथिव्या मप्सु वा कस्मान्नोत्सादयेत् इत्याह,— "तस्मै वा इति । एष प्रवर्ग्य, आत्मत्वाच्छोक- विशिष्टो भवति । अतस्तं यदि पृथिव्यां मुत्सादयेत् तदा, तस्य शोकः पृथिवीं प्राप्नोति । अथ यद्यप्सु उत्सादयेत्, तदापश्च शोकापः प्राप्नोति । तस्मात् तत्र नोत्सादनीयः- किन्तु परिप्लवे तथा च पृथिवी मपश्च न हिनस्ति ननु; परिप्लव उत्सादनेऽपि तत्र तदुभय सम्भवात्, कथं तासां हिंसाभावः इति । तत्राह,— "यद्वाप्सिति । अपां मध्ये- ऽत्सादयो हिनस्ति यद्यद्वीपे पृथिवी मेवोत्सादयति । तया परिमितः शान्तिहेतु भूताभिरद्भिर्वेष्टयितत्वात् पृथिव्या अपि हिंसानास्तो इत्यर्थः ॥ १८ ॥

प्रवर्ग्योदासनस्य स्थानान्तरं विधत्ते—, "अग्नौ त्वेवेति ॥- पूर्वोक्त परिप्लवे अग्नौ वा प्रवर्ग्य उत्साद्यते, इति विकल्प- विधान मेतत् । अतएव, कात्यायनः— "अग्नौ परिप्लवे वा इति † । तत्तस्य प्रवर्ग्यस्य परिप्लव एवोदासने, कस्यचिदपि बाधाभावादस्याप्यग्नेः परिसन्दत माह— ,"इमे वै लोका, इति । पृथिव्यादिलोकात्मकत्वादग्नेः समुद्रपरिवेष्टनात् परिश्रिता- मेवात्मकत्वम् ॥ २० ॥

* "अग्नौ इष्टकाचितः स्थलरूपे • परिप्लवे यस्य परितः आपः स्यन्दन्ते परिगच्छन्ति परिप्लवो द्वीपः जलमध्यस्थो जलानाच्छादित उच्चप्रदेशः"—इति का० श्रौ० सू० १८. ३. ११ ।

† "उपसदन्ते प्रवर्ग्यासादनं यथोक्त मग्नौ परिप्लवे वा"—इति का० श्रौ० सू० १८. ३. १० ।

अथाग्नावेवोद्दासनं प्रशंसति,— "यद्देवेति। अन्यादयो देवा दीप्यमानत्वेन 'प्रवर्ग्यो' अतश्च लोकत्रयात्मकादग्नेरन्यत्र प्रवर्ग्योत्सादने अन्यादीनेवैतेभ्यो लोकेभ्यो बहिर्द्धा कुर्यात्। अग्नौ तदुद्दासने तु एष्वेव लोकेषु अन्यादीन्निहितवान् भवति। अन्नाद्युत्सादयतीति लोपः शाकल्यस्येति * वकारस्य लोपः ॥ २१ ॥

अथ पुनस्तत्रैवोद्दासनं यज्ञस्य शिरः शरीरसन्धानरूपेण प्रशंसति ;— "यद्देवाग्ना उत्सादयतीति ॥ २२ ॥

यदास्वग्न्यानुत्सादनं तदोद्दासने विशेष माह— "स्वयमातृण्ण-येति। 'प्रथमं प्रवर्ग्यं' स्वयमातृण्णाया 'संस्पृष्ट' मुद्दासयेत्। एवञ्च स्वयमातृण्णायाः † प्राणरूपत्वात् प्रवर्ग्यात्मकस्य यज्ञस्य शिरसः सचिताग्न्यात्मकस्य यज्ञशरीरस्य प्राणेन सन्धानं करोति। "अन्द-धातीति। अस्यैव विवरणं 'उत्साद्य प्रवर्ग्य मिति'। तस्य प्रव-र्ग्यस्य यथा येन प्रकारेण प्रवर्ग्यकाण्डोक्तप्रकारेण उत्सादन मुक्तं तेन प्रकारेण प्रवर्ग्यं मुत्सादयेत् प्रत्येत्याग्निं अवरिष्यमित्या-द्युक्तकालक्रियापञ्चगोत्साद्येतिस्थस्तस्य प्रयोगः ॥ २३ ॥ १ ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

नवमकाण्डे द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥

---

* पा० सू० ८. ३. १९।

† का० श्रौ० सू० १८ ३. १३।

॥ अथ द्वितीयं ब्राह्मणम् ॥

प्रत्येत्याग्निं प्रहरिष्यन् * । आहुतीश्च जुहोति समिधश्चादधात्येतद्वा ऽएनं देवा एष्यन्तं पुरस्ताद्-न्नेनाप्रीणन्नाहुतिभिश्च समिद्भिश्च तथैवैनमय मेत-देष्यन्तं पुरस्तादन्नेन प्रीणात्याहुतिभिश्च समिद्भिश्च स वै पञ्चगृहीतं गृह्णाति तस्योक्तो बन्धुः † ॥ १ ॥

अथ षोडशगृहीतं गृह्णाति । षोडशकलः प्रजापतिः प्रजापतिरग्निरात्मसम्मितेनैवैन मेतदन्नेन प्रीणाति यदु वा ऽआत्मसम्मित मन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत् कनीयो न तदवति समान्याꣳ स्रुचि गृह्णाति समानो हि स य मेतत् प्रीणाति वैश्वकर्मणाभ्यां जुहोति विश्वकर्मायमग्निस्त मेवैतत् प्रीणाति तिस्र ऽआहुती-

* 'प्रहरिष्यन्'—इति ग, घ।

† 'बन्धुः'—इति ङ।

जुहोति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति * ॥ २ ॥

अथ समिध ऽआदधाति । यथा तर्पयित्वा परिवेविष्यात्तादृक्तदौदुम्बर्यो भवन्त्यूर्ग्वै रस उदुम्बर ऽऊर्जैवैनमेतद्रसेन प्रीणात्यार्द्रा भवन्त्येतद्वै व्वनस्पतीना मनात्तं जीवं यदार्द्रं तदेव व्वनस्पतीना मनात्तं जीवं तेनैन मेतत् प्रीणाति घृते न्युत्ता भवन्त्याग्नेयं वै घृतꣳ स्वेनैवैन मेतद् भागेन स्वेन रसेन प्रीणाति सर्वाꣳ रात्रिं व्वसन्ति तत्र हि ता रसेन सम्पद्यन्ते तिस्रः समिध आदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति ॥ ३ ॥

यद्वेवैता आहुतीर्जुहोति । एतद्वा ऽएनं देवा ऽएष्यन्तं पुरस्तादन्नेन समस्कुर्वन्नेताभिराहुतिभिस्तथैवैन मय मेतदेष्यन्तं पुरस्तादन्नेन संस्करोत्येताभिराहुतिभिः ॥ ४ ॥

* 'प्रीणाति'—इति ख ।